# युगपुरुषः आदिशङ्कराचार्यः

## (जीवनवृत्तमाश्रित्य विरचितं प्रकरणनाट्यम्)



संस्कृतानुवादकः

**स्वामिसदानन्दः सरस्वती**

श्रीशारदापीठम्, द्वारका, देवभूमिः द्वारका, गुजरातप्रदेशः



## समर्पण

अनन्तश्रीविभूषित ज्योतिष्पीठाधीश्वर एवं द्वारकाशारदापीठाधीश्वर जगद्गुरु शङ्कराचार्य

**स्वामीश्री स्वरूपानन्द सरस्वती जी महाराज**

# युगपुरुषः आदिशङ्कराचार्यः

( जीवनवृत्तमाश्रित्य विरचितं प्रकरणनाट्यम् )

संस्कृतानुवादकः

**स्वामिसदानन्दः सरस्वती**

श्रीशारदापीठम्, द्वारका, देवभूमिः द्वारका, गुजरातप्रदेशः

मूल गुर्जरभाषालेखिका स्वामिनी विद्याप्रकाशानन्दा

अहमदाबाद



प्रकाशकः

**श्रीशारदापीठप्रकाशनम्**

शङ्कराचार्य मठ,द्वारका-361335, देवभूमि द्वारका (गुजरात)

दूरभाष : 02892-235109

# युगपुरुषः आदिशङ्कराचार्यः

( जीवनवृत्तमाश्रित्य विरचितं प्रकरणनाट्यम् )

संस्कृतानुवादकः

**स्वामिसदानन्दः सरस्वती**

श्रीशारदापीठम्, द्वारका, देवभूमिः द्वारका, गुजरातप्रदेशः

मूल गुर्जरभाषालेखिका **स्वामिनी विद्याप्रकाशानन्दा**

अहमदाबाद

प्रथमं संस्करणम् 3000 प्रतयः

वसन्त पञ्चमी, सं. 2073

प्रकाशकः

**श्रीशारदापीठप्रकाशनम्**

शङ्कराचार्य मठ, द्वारका-361335, देवभूमिः द्वारका (गुजरात)

दूरभाष : 02892-235109

मूल्य : १०० रू. मात्र

---

मुद्रक

वोरार्ट, 210, सर्वोदय, जी.पी.ओ. के पास

अहमदाबाद-380001. दूरभाष : 079-25504503

अनन्तश्रीविभूषित ज्योतिष्पीठाधीश्वर एवं द्वारकाशारदापीठाधीश्वर जगद्गुरु शङ्कराचार्य
स्वामी स्वरूपानन्द सरस्वती
श्रीशारदापीठम्
द्वारका, देवभूमि द्वारका (गुजरात)
दूरभाष : 02892-235109
जोशीमठ
तोटकाचार्य गुफा, चमोली, गढ़वाल (उत्तराखण्ड)
दूरभाष : 01389-222185

क्रमाङ्क :

दिनाङ्क :
स्थान :



# नमः कपर्दिने च व्युप्तकेशाय च

नारायणस्मृतिः

नाटकं हि देवानां शान्तः चाक्षुषः क्रतुः, येनेष्टाः दिवौकसोऽपि प्रीताः प्रयच्छन्ति अभीष्टान्। स्वामिनः श्रीविदितात्मानन्दस्याज्ञया तदीया शिष्या स्वामिनी विद्याप्रकाशानन्दा भूतभावनस्य भगवतः कपर्दिनः शङ्करस्य व्युप्तकेशरूपस्य अभिनेयं चरित्रं प्रणीतवती अस्ति। अधुना इदं नाटकं मम शिष्येण सदानन्द सरस्वतीस्वामिना अनुदितं शारदापीठविद्यासभया प्रकाश्यते। अनेन क्रतुना इष्टः स ईशानः सर्वविद्यानाम् प्रतिपादयेत् सर्वेभ्योऽप्यात्मैकत्वविद्यामित्याशास्महे।

शुभाशिषः सन्तु

स्वरूपानन्द सरस्वती

(स्वरूपानन्दसरस्वती स्वामिनः)

कार्तिक-३० (दीपावली)

वि.सं. २०७३, सन् २०१६




**'स्वामिश्रीः' अविमुक्तेश्वरानन्दः सरस्वती**



10 अक्टूबर 2016 ई.

## हार्दम् ......

श्रीमच्छङ्करभगवत्पादजीवनमाधारीकृत्य स्वामिनीविद्याप्रकाशानन्दया गुर्जरभाषामाश्रित्य विरचितं प्रकरणनाट्यमस्माभिः ज्योतिष्पीठ-द्वारकाशारदोभयपीठाधिपानां श्रीमत्परमहंसपरिव्राजकाचार्यादिविविधविरुदावलिविभूषितानां जगद्गुरुशङ्कराचार्यश्रीस्वरूपानन्दसरस्वतीस्वामिपादानां वर्द्धापनोत्सवावसरे परमहंसीगङ्गाक्षेत्रे (मध्यप्रदेशे) हिन्दीभाषायामभिनीयमानं दृष्टमासीत् ।

तदेवाद्य शारदापीठाद्यनेकसंस्थासञ्चालकैरस्मत् पूज्यगुरुभ्रातृभिः श्रीसदानन्दसरस्वतीस्वामिपादैः संस्कृतभाषयानूदितं दृष्ट्वाऽतितरं मोमुद्यमानमस्ति नश्चित्तम् । नाट्यं किमिति प्रश्ने साहित्यदर्पणोक्तिः प्रसिद्धाऽस्ति —

नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः । ईहामृगाङ्कवीथ्यः प्रहसनमितिरूपकाणि दशेत्यत्र दशरूपकेषु षट्त्रिंशल्लक्षणसम्मितनाटकस्य प्राथम्यम् । रूपारोपाद् नाटकमेव रूपकम् । अतः एतेषु नाटकम् प्रधानम् । नाटकेषु आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात् नायक एव नाटकः भवति । 'धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च । धीरप्रशान्त' इत्ययमुक्तेषु चतुर्ष्वपि भेदेषु भगवत्पादाः शङ्कराचार्याः धीरोदात्तनायकाः । यथोक्तम् — 'त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही । दक्षोऽनुसमलोकस्तेजो वैदग्ध्य शीलवान् नेता' । तादृशानां भगवत्पादस्तुतावस्माकं श्रीगुरुपादैः —

नानादर्शनकाव्यसंचयवनी सञ्चारपञ्चाननो नानावादमहासुरद्रुमलसद्वासन्त पुष्पोत्सवः ।

नानाशास्त्रसमुल्लसत्सुरगनी हैयङ्गवीनास्पदं नानाम्नायविवेकधीर्विजयते श्रीशंकरार्यो महानिति उक्तमासीत् । श्रीमच्छङ्करभगवत्पादानां विषये देवभाषायां प्रकरणनाटकस्य मञ्चनं न केवलं गीर्वाणवाणीभक्तानां कृते प्रमोदाय भविष्यति अपितु शंकराचार्यभक्तेष्वपि भक्तिप्रवाहपूरयितृत्वेन ख्यातिमायास्यतीति विश्वसिमः । ग्रन्थमिदं लोकानामुपकारायैवास्मत्पूज्यगुरुभ्रातृभिरनूदित इत्यत्र काऽऽस्ति शंका ? तैः बहूनि कार्याणि तादृशानि कृतानि वर्तन्ते यत्र सामान्यानां सामान्येन गतिरेव न भवति । मन्ये अध्यवसायप्रतिमूर्तीनितादृशानेवालक्ष्याश्वघोषेणोद्घोषितं भवेत् —

काष्ठं हि मथ्नन् लभते हुताशं भूमिं खनन् विन्दति चापि तोयम् ।
निर्वन्धिनः किञ्चन नास्त्यसाध्यं न्यायेन युक्तं च कृतं च सर्वम् ॥

यथाऽवयोः श्रीगुरवः तथैव तेषां सच्छिष्याः श्रीमत्सदानन्दसरस्वतीस्वामिनः परोपकारार्थमेव धृतशरीराः समेषां कल्याणमातन्वानाः सन्ति । रचनेयं सुरसरिताधारा इव समेषां कल्याणाय स्यादिति कामयन् —

सदैव स्वामिभिर्दत्तस्नेहादरादिभिरनुगृहीतः

('स्वामिश्रीः' अविमुक्तेश्वरानन्दः सरस्वती)

श्रीविद्यामठ, केदारघाट, वाराणसी - 221001 (उत्तर प्रदेश)
दूरभाष - 0542 - 2450520 / 2450362, चलभाष - 09670296702 / 9670396703 / 9670496704 ई-मेल - dharmamanch@gmail.com



# નમો ગુરુભ્ય:

મારા ગુરુદેવ પૂજ્યપાદ સ્વામીશ્રી વિદિતાત્માનંદજીએ 'યુગપુરુષ આદિ શંકરાચાર્ય'ના મૂળ ગુજરાતી પુસ્તકના પ્રકાશન (વર્ષ ૨૦૦૯)ના આશીર્વચનમાં લખ્યું છે : 'આ નાટક લોકપ્રિય બને, તે વધુ ને વધુ સ્થળોએ ભજવાય અને ઈતર ભાષાઓમાં પણ તેનો અનુવાદ થાય તે માટે હું પ્રભુને પ્રાર્થના કરું છું.'

'યુગપુરુષ આદિશંકરાચાર્ય' નાટકના ૧૭ સફળ પ્રયોગ ભારતભરમાં થઈ ચૂક્યા છે. પહેલા ચાર પ્રયોગ ગુજરાતીમાં થયા, તે પછીના હિંદીમાં, ભારતની ચારે શાંકર પીઠોના વર્તમાન પીઠાધીશ્વર શંકરાચાર્યજી મહારાજ સહિત અનેક ગણ્યમાન્ય મહાત્માઓએ એક કે વધુ વાર, પ્રત્યક્ષ કે પરોક્ષ રીતે (ડીવીડી દ્વારા) આ નાટક જોયું છે, અને જોઈને તેની ભૂરિ ભૂરિ પ્રશંસા કરી છે. વર્ષ ૨૦૧૦માં નાટકના પુસ્તકના હિંદી ભાષાંતરનું પ્રકાશન આધ્યાત્મ વિદ્યામંદિર દ્વારા કરવામાં આવ્યું. અને આજે એ પુસ્તકનું સંસ્કૃત ભાષાંતર શારદાપીઠ, દ્વારકા દ્વારા પ્રકાશિત થઈ રહ્યું છે. દ્વારકા શારદાપીઠાધીશ્વર જગદ્ગુરુ શંકરાચાર્ય સ્વામીશ્રી સ્વરૂપાનંદ સરસ્વતીજી મહારાજના અનુગામી શિષ્ય પૂજ્ય સ્વામીશ્રી સદાનંદજી આ પુસ્તકનું સંસ્કૃત ભાષાંતર કોઈ વિદ્વાન દ્વારા કરાવવાનું વિચારતા હતા. મેં ક્યારેક પૂજ્ય સ્વામીજીને પૂછ્યું કે આપ જ આ ભાષાંતર કરવાનું ન વિચારી શકો? મારી વિનંતીનો સ્વીકાર કરતાં પૂજ્ય સ્વામીજીએ કહ્યું : अहमपि कर्तुं शक्नोमि; હું કરી તો શકું.' પૂજ્ય સ્વામીજીએ ભાષાંતર કરવાનું શરૂ કર્યું. પોતે અનેક આશ્રમોની અનેકવિધ પ્રવૃત્તિઓમાં તથા પ્રવચનાદિમાં નિરત રહે છે તે છતાં સાત-આઠ માસ જેટલા ટૂંકા સમયગાળામાં પૂજ્ય સ્વામીજીએ ભાષાંતર પૂરું કર્યું, અને તેના પ્રકાશનની પ્રવૃત્તિ પણ હાથ ધરી.

મને આનંદ છે કે મારા પૂજ્યપાદ ગુરુદેવનાં આશીર્વચન ફળી રહ્યાં છે. સાથે ગૌરવ પણ છે કે આદિ શંકરાચાર્યજીના જીવનવૃત્ત ઉપર આધારિત નાટકના પુસ્તકનું દેવભાષામાં ભાષાંતર શાંકરપીઠ દ્વારા પ્રકાશિત થઈ રહ્યું છે,

અને તેના ભાષાંતરકર્તા સ્વયં મઠના આદર્શ સંન્યાસી પોતે છે.

મારા ગુરુદેવ પૂજ્યપાદ સ્વામીશ્રી વિદિતાત્માનંદ સરસ્વતીજી મહારાજના સંન્યાસદીક્ષાના રજતજયંતી વર્ષમાં પૂજ્યશ્રીની સપ્તત્યબ્દપૂર્તિનો પ્રસંગ પણ પ્રાપ્ત થતો હતો, ત્યારે, વર્ષ ૨૦૦૯ માં, ભગવાન આદિશંકરાચાર્યજીના જીવનવૃત્તને ગુજરાતી નાટકના રૂપમાં મંચસ્થ કરવાનું મેં વિચાર્યું. તે માટે કોઈ શાંકર ભક્ત લેખકે લખેલ નાટકનું પુસ્તક શોધવાનો ઘણો પ્રયત્ન મેં કર્યો. એ પ્રયત્ન સફળ ન થયો, છેવટે મેં લખવાનું શરૂ કર્યું. નાટક લખવા માટે શંકરદિગ્વિજય સહિત નાના મોટા તફાવતા હતા; છતાં તેના ઘણા અંશોમાં સંમતિ પણ હતી. આ સંમતિ ધરાવતા અંશોના આધારે પ્રકૃત નાટકમાં ભગવાન શંકરાચાર્યજીના જીવનવૃત્તની મહત્ત્વની ઘટનાઓને આલેખવાનો પ્રયત્ન મેં કર્યો છે. આજ આ નાટક સંસ્કૃતમાં અનુવાદ કરીને પ્રકાશિત થઈ રહ્યું છે – યુગપુરુષ આદિશંકરને કોટિશઃ વંદન.

**સ્વામિની વિદ્યાપ્રકાશાનંદા**
અધ્યાત્મ વિદ્યા મંદિર, 'તત્ત્વતીર્થ'
થલતેજ, અમદાવાદ (ગુજરાત)

# प्रशस्ति

काव्य अपनी रसात्मकता के कारण जनमन को आकृष्ट कर सत्कर्मों में प्रवृत्त करता है। इसीलिए काव्य को कान्ता सम्मित उपदेश कहा गया है। काव्य के दृश्य–श्राव्य रूपों में दृश्य रूप का महत्त्व अधिक है, ठीक वैसे ही जैसे कि सुनी सुनायी बात से आँखों देखी बात अधिक प्रामाणिक होती है। इसीलिए जनगण के समक्ष ऐतिहासिक महापुरुषों के चरित्र को प्रस्तुत करने के उद्देश्य से नाटक की कल्पना साकार हुई। नाटक शब्द नट धातु से निष्पन्न होता है, जिसका अर्थ है – नृत्य करना। नाटक में अभिनय करने वाले पात्र नट कहे जाते हैं, और भगवान् शङ्कर नटराजराज हैं। इन्हीं नटराजराज ने आज से लगभग २५२२ वर्ष पूर्व पुण्यभूमि भारतवर्ष में आचार्य शङ्कर के रूप में अवतरित होकर विनाशोन्मुख वैदिक सनातन धर्म को पुनः प्रतिष्ठित किया। उनके द्वारा इस देश की चारों दिशाओं में स्थापित मठ मानवता को उसकी एकता और अखण्डता का पाठ पढ़ा रहे हैं। आचार्य शङ्कर के जीवन चरित्र को यों तो अनेक कवियों ने काव्यबद्ध किया है जिनमें माधवाचार्य का शङ्करदिग्विजय प्रसिद्ध है, किन्तु नटराजराज के चरित्र को गुर्जर एवं हिन्दी भाषा में नाटक के रूप में रङ्गमञ्च पर प्रस्तुत करने का श्रेय स्वामिनी विद्याप्रकाशानन्दा को जाता है। इन्होंने अपने गुरुदेव स्वामी श्री विदितात्मानन्द जी के आदेश से इस प्रशंसनीय कार्य को सम्पन्न किया है। तृतीय संस्करण में पश्चिमाम्नाय द्वारकाशारदापीठ शङ्कराचार्यमठ के विद्वान् संन्यासी स्वामीश्री सदानन्द सरस्वती जी ने संस्कृत में अनुवाद कर शाङ्कर परम्परा को "युगपुरुषः आदिशङ्कराचार्यः" प्रदान किया है, यह नाटक द्वारकाशारदापीठ की ओर से देववाणी संस्कृत में प्रकाशित हो रहा है जो संस्कृत जगत के लिए महती उपलब्धि है।

**नारायणानन्द ब्रह्मचारी**
**उपाध्यक्ष**
**शारदापीठ विद्यासभा, द्वारका**

# प्रकाशकीयम्

अद्य प्रारभ्य प्रायः २५०० वर्षेभ्यः पूर्वं प्रादुरभवन् आद्यशङ्कराचार्याः वर्षेऽस्मिन् भारते। तदा वर्षमिदं भारतमास्कन्दितमासीत् सांस्कृतिकेन ह्रासेन राजनैतिकेन पराभवेन वैचारिकैः च मतभेदैः। संगच्छध्वं संवदध्वम् इति श्रुतेः अर्थम् अनुसरन्ती सामाजिकी सांस्कृतिकी धार्मिकी आध्यात्मिकी च संवादशीलता अभवत् आस्कन्दिता उग्रैः पाखण्डपराक्रमणैः। प्रजा च भारतीया अवैदिकानां नानामतमतान्तररूपाणां जाले निगृहीता अभवत्। भारतीयायाः जीवनपद्धतेः प्राणभूतं वेदप्रामाण्यमेव प्रत्याख्यायते स्म। देवार्चनं देवोपासनमपि वाममार्गानुगामिना तंत्रवादेनाभिभूताऽभवत्। मठाः अपि अवैदिकानां न अतिष्ठन् मुक्ताः दुष्प्रभावात् वामपन्थस्य। अधर्मः धर्मम् तिरोऽकरोत्, तमश्च रजः उपाद्रवत्, भोगबुद्धिश्च कर्तव्यबुद्धिमभ्यभवत्। निष्कामता सत्त्वगुणश्चेत्यु-भावपि यत्र उपेक्षितौ अनाश्रितौ अभवताम् तत्र नैष्कर्म्यस्य कथैव का प्रष्टव्या भवेत्?

कालेऽस्मिन् ईदृशे प्रतिकूलवृत्तौ संक्रामति केलासपर्वतमुपेताः देवाः प्रार्थयाञ्चक्रिरे शिवं रक्षितुं सनातनं धर्मम्। सा देवप्रार्थना फलिताभवत्। शिवाज्ञया कुमारिलभट्टपाद-रूपेणावतीर्णः शिवपुत्रः कार्तिकेयः पुनः प्रावर्तयत वैदिकानि वर्णाश्रमोचितानि कर्माणि, जपं तपः उपवासं व्रतं यज्ञं दानं संस्कारान्, उत्सवान् प्रायश्चित्तानि इत्यादि परम्पराप्राप्तान् आचारान् च। ततः त्यक्तवैदिककर्माणः विषयोपभोगरताः अपि प्रवृत्ताः अभवन्, नित्यनैमित्तिकादिषु कर्मसु। तमःप्रधानेषु जनेषु रजः प्रावर्तत संचरितुम्।

इत्थं प्रवर्तिते लोके वैदिकेषु कर्मसु स्वयं भगवान् शंकर एव अवातरत् यतिशिरोमणेः जगद्गुरोः शङ्कराचार्यस्य रूपेण। आचार्यदेवः त्रिः पादचारं परिक्रान्तवान् समग्रं भारतं वर्षम्। शिवस्य शक्तेः गणेशस्य सूर्यस्य विष्णोश्च उपासनायाः शुद्धस्य सात्विकस्य वैदिकस्य च स्वरूपस्य प्रतिपादनेन स्मार्तस्य धर्मस्य आधारशिलाम् एव स्थापितवान् आचार्यदेवः। प्रावर्तत च पूजापद्धतिम् उपासितुं सर्वान् देवान्। तदा प्रवर्तमानैः प्रायः ७२ मतावलम्बिभिः विधाय शास्त्रार्थं प्रदर्श्य च विदुषः तान् दोषान् तत्तन्मते विद्यमानान्, ब्रह्मात्मैक्यबोधेन मोक्षमार्गमभिनिवेशयामास शङ्कराचार्यः, येन वर्णाश्रमविरोधिन्यः अवैदिक्यः परम्पराः क्षयितुं प्रवृत्ताः। अतिरिच्य च एतत्

दृढीकृत्य आस्थाः प्रवर्त्य च परम्पराः समाजस्य सनातनधर्मानुयायिनः, जीवब्रह्मणो-रैक्यस्य नित्यसिद्धस्य प्रतिपादनेन केवलाद्वैतं प्रतिष्ठापयामास आद्यः शङ्कराचार्यः ।

एभिरेव श्रीशङ्कराचार्यस्यानुत्तमैः प्रदानैः सर्वात्मबोधस्य प्रतिष्ठापरैः अभावि श्रीशङ्कराचार्यः आधारस्तम्भः सनातनस्य धर्मस्य, पुरुषोऽस्य युगस्य, गुरुश्च जगतः, न तु तदनुष्ठितेन केनचित् चमत्कृतिकारिणा आचरणेन । अमूल्यमस्ति प्रदानम् एतत् श्रीशङ्कराचार्यस्य यदिदं वर्षं भारतं शोभतेतराम् संस्कृतं बाह्यतः वैदिक्या संस्कृत्या अभ्यन्तरतश्च आत्मैकत्वविद्याप्रतिपत्त्या । तदिदं प्रदानं बोधयितुं जनान् भारतीयान् स्वामिनी विद्याप्रकाशानन्दा प्रेरिता पूज्येन स्वामिना विदितात्मानन्देन, अध्यक्षेन स्थापकेन च अध्यात्मविद्यामन्दिरस्य, विरचितवती प्रकरणनाट्यमेकं, शङ्कराचार्यस्य जीवनवृत्तमाश्रित्य गुर्जरभाषया निबद्धम् । यथेदं लोके ख्यातमभूत् तेनानुमातुं शक्यते यत् विषमेऽपि अनेहसि अस्मिन् मतेनेव नामरूपाचरितैः अपि आचार्यस्य शङ्करस्य आकृष्टाः भवन्ति शिक्षिताः प्रज्ञाजीविनः विद्वांसः । ज्ञापितः भवति अनेन भावी भाग्योदयः मंगलकारकः भारतस्य वर्षस्य । सम्प्रति तावत् लोकोऽयमनवगतयाथार्थ्यः भ्रान्तः विषयेषु, निष्कामकर्मणः भक्तेः उपासनायाः पूजायाः धर्मस्य भगवतः अध्यात्मम्, मोक्षस्य च सदृशेषु, उत्पथप्रवृत्तः अमंगलमेवात्मन आतायमानो दृश्यते। तमिमं लोकं विधातुमभ्रान्तं प्रवर्तयितुं च सत्पथे श्रीशङ्कराचार्येणाविष्कृतोऽभूत् कश्चनाभिनवो विचारमार्गः येन मार्गन्तः बहवो हि अलभन्त अभिलषितमात्मनः ।

स्वयमप्यात्मन आचरितेन कुशलेन स्थापितवाननुत्तममादर्शं पुरतो लोकस्य शङ्कराचार्यः । सेवितुमात्मनः मातरं परिवर्त्य प्रवाहं पूर्णनद्यास्तां गृहोपकण्ठमकरोत्। तस्या एव नद्याः प्रवाहेण आपदापन्नं श्रीकृष्णविग्रहमपनीय ततोऽरक्षत् । सर्वज्ञत्वस्यासादनेन पितुः, अन्त्य समये उपस्थानेन च मातुरभीष्टं समपादयत् । आज्ञां गुरोः पालयता शङ्कराचार्येण व्याख्यातानि शास्त्राणि । निर्माय भाष्यादीन् प्रचारितः वेदान्तसिद्धान्तः । मतमद्वैतं विरुन्धानान् विजित्य वैजयन्ती मतस्याद्वैतस्योद्धृता समग्रेऽपि भारते वर्षे । भारतस्य चतुर्ष्वपि दिक्षु चतुर्णां मठानां संस्थापनेन धर्मस्याधाराशिलेव निहिता । सता अपि परिव्राजकेन निर्वर्तितः मातुरन्तिमः संस्कारः। द्विजोत्तमेनापि तेन चाण्डालोऽभवत् प्रणतः । प्रार्थितः, कापालिकेन उद्यतोऽभवत् तस्मै स्वशिरः दातुम् । इत्थमात्मनः

आचरितेन प्रादर्शयत् शङ्कराचार्यः आदर्शस्य पराकाष्ठायाः परमं निदर्शनम् सर्वेभ्यः आश्रमिभ्यः वर्णिभ्यश्च, साधकेभ्यः सिद्धेभ्यश्च, शिष्येभ्यः गुरुभ्यश्च। वैराग्यम् संन्यासश्च समग्रेण आत्मनः स्वरूपेण तस्मिन् प्रादुर्भूतौ आस्ताम्।

नाटकेऽस्मिन् प्रायः सर्वाः अपीदृशीः घटनाः शङ्कराचार्यजीवने वृत्ताः, निरूपयितुं प्रयत्नः कृतो विद्यते। नाटके विद्यमाना नान्दी, भरतवाक्यं नृत्यगीतं च सन्ति नाटक लेखिकायाः स्वरचितानि। अन्ये संस्कृतश्लोकाः शङ्कराचार्यस्य कृतिभ्यः, माधवाचार्य विरचितात् शङ्करदिग्विजयात् च उद्धृताः सन्ति। प्रसंगानुरूपमेव वैदिकाः मन्त्राः श्रीमद्भगद्गीतायाः श्लोकाः, भगवता शङ्कराचार्येण रचिते भाष्ये प्रयुक्तानि वाक्यानि च प्रयुक्तानि सन्ति। नाटकेऽस्मिन् एकः गुरुः, तस्य द्वौ शिष्यौ जिज्ञासुः मुमुक्षुश्च सूत्रधारस्य कर्तव्यं निर्वहन्ति। यथाक्रमं प्रवृत्तयोः दृश्यद्वयोरन्तरं निरन्तरयन्त इमे क्वचित् प्रवृत्तेन तत् संगमयन्ति, क्वचित् च नाटके अप्रयुक्तानपि दार्शनिकान् सिद्धान्तान् उद्घोषयन्ति।

प्रकरणनाट्यमिदमेवाश्रित्य निबद्धमेकमन्यत् संक्षिप्तरूपं नाटकमभिनीतमप्यभूत् षोढा दिग्दर्शकस्य डॉ. विक्रम पंचालस्य सहयोगेन। षष्ठे चेदृशे नाटने नाटकमिदं हिन्दीभाषयाऽनूदितं प्रकाशितमभूत्। सम्प्रति नाटकस्यास्य संस्कृतया गिरानूदितं रूपं संस्कृते श्रद्धावतां पुरुषाणाम् पुरतः उपह्रियते। संस्कृतमधीयानाः प्रथमामध्यमागताः बालकाः अपि सुखं अवगत्य शङ्करचरित्रं नाटयितुं प्रभवेयुः इति हेतोः नाटकेऽस्मिन् यथाशक्यं पदानि असंहितानि एव प्रयुक्तानि सन्ति। एतदर्थम् महदायासितवद्भ्यः श्रीसदानन्दसरस्वतीस्वामिपादेभ्यः आधमर्ण्यमस्माकं निवेदयामः। पुस्तकमिदं, नाटनं चास्य प्रभवताम् बोधयितुमेकैकं जनं भारतीयम् आद्यस्य शङ्कराचार्यस्योपदिष्टमाचरितं च इत्येतदर्थं प्रार्थयामहे चरणौ जगद्गुरोः भगवतः श्रीशङ्करस्य।

डॉ. सच्चिदानन्द द्विवेदी
पूर्व संस्कृत विभागाध्यक्ष -
शारदापीठ कॉलेज, द्वारका
धर्मसंघ महाविद्यालय, वृन्दावन (उ.प्र.)

माघ शु.- ५ सं. २०७३
(वसन्त पञ्चमी)
३१ जनवरी २०१७

# विषयानुक्रमणिका

**अज्ञानान्तर्गहनपतितानात्मविद्योपदेशै -**
**स्त्रातुं लोकान् भवदवशिखातापपापच्यमानान् ।**
**मुक्त्वा मौनं वटविटपिनो मूलतो निष्पतन्ती -**
**शम्भोर्मूर्तिश्चरति भुवने शङ्कराचार्यरूपा ।।शं.दि.४/६०।**

****

अज्ञान के गहरे अन्धकार में गिरे हुए तथा संसाररूपी
अग्नि की ज्वाला से सन्तप्त होने वाले लोगों को
आत्मविद्या के उपदेशों से रक्षा करने की
इच्छा से मौन को छोड़कर वटवृक्ष
के मूल से निकलने वाली यह
भगवान् शङ्कर की मूर्ति है
जो शङ्कराचार्य के रूप
से भुवन में भ्रमण
कर रही है ।

# नान्दी एवं स्थापना

## स्थानम् - कैलासपर्वतः

गुरुः ब्रह्मचारिणौ द्वौ शिष्यौ जिज्ञासुः मुमुक्षुश्च, शिवः, पार्वती, इन्द्रः, ब्रह्मा, विष्णुः, कार्तिकेयः, वायुः, वरुणः, सरस्वती च ।

हेरम्बो गिरिजापतिर्मतिपतिर्नारायणः श्रीपति -
र्व्यासः श्रीशुकदेवगौडचरणौ गोविन्दपादो गुरुः ।
श्रीमच्छङ्करपद्मपादसहिताः श्रीचिन्मयो देशिको
दीक्षादातृदयार्णवोऽथ विदितप्रत्यक्सुखो मे गुरुः ।।
एते वैदिकधर्ममार्गनिरता वेदैकवेद्ये वराः
सच्चिदब्रह्मसुखोपदेशपटवो नम्या मया सर्वदा ।।
नम्या मया सर्वदा ।।

रंगमंचे गुरुः आस्ते । मीलिते तस्य चक्षुषी करौ च क्रोडे उच्चावचं न्यस्तौ । अवसिते एव नान्दीपाठे तौ शिरः अवनमय्य सकरबद्धं प्रणमतः। पुनरक्षिणी उन्मीलयतः । अभितः तम् ब्रह्मचारिणौ तस्य जिज्ञासुमुमुक्षू प्रविशतः ।

मुमुक्षुः- (करौ संयोज्य) गुरुदेव! प्रणमामि । (साष्टाङ्गं प्रणमति)

जिज्ञासुः- (करौ संयोज्य) प्रणमामि गुरुदेव । (साष्टाङ्गं प्रणमति)

गुरुः- नारायण नारायण नारायण ।

(उभौ शिष्यौ गुरोः समक्षम् आसने उपविशतः । पुनः गुरुः शिष्यौ च निमील्य चक्षुषी सह एव शान्तिमन्त्रं पठन्ति)

त्रयोऽपि सहैव -

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ।।
ॐ शान्तिः शान्तिः शान्तिः ।।

मुमुक्षुः- गुरुदेव, वयं यदा बालाः आस्म, तदा भोजनात् पूर्वम् ईदृशम् एव किमपि गायामः स्म - "सह खादेम, सह क्रीडेम, संगत्य वयम्

अनुतिष्ठेम" गीतम् इदं गीतवद्भिः एव अस्माभिः अशनं लभ्यते स्म। यः अयम् अस्माभिः पठितः मन्त्रः सहनाववतु इति सः अपि ईदृशः एव अस्ति किम् ?

जिज्ञासुः- अहम् अपि इमं "सह नाववतु" इति मन्त्रं भोजनात् पूर्वमेव पठ्यमानम् श्रुतवान् अस्मि ।

मुमुक्षुः- अरे जिज्ञासो ! न वयम् अत्र भोजनार्थिनः प्राप्ताः, स्वाध्यायम् अध्येतुम् उपेताः गुरुदेवम् ।

जिज्ञासुः- अरे भ्रातः मुमुक्षो ! स्वाध्यायम् अध्येतुं कोऽर्थः गुरुणा? किम् अस्माभिः स्वयं नाधीयते स्वाध्यायः? त्वयि अद्य प्रवक्तरि अहं श्रोता भवानि, श्वः मयि प्रवक्तरि त्वं श्रोता स्याः। अयम् एव स्वाध्यायः इति उच्यते, किम् अन्यत् ? अपि इदं यथार्थं गुरुदेव?

गुरुः- स्वाध्यायः वेदाध्ययनम्, तत् च गुर्वध्ययनपूर्वकम्, प्रथमं गुरुः वेदमन्त्रान् उच्चारयति, ततः तम् अनुसरन् शिष्यः अपि तान् एव वेदमन्त्रान् उच्चारयति, इदम् एव स्वाध्यायः इति उच्यते ।

जिज्ञासुः- तर्हि स्वाध्यायस्य किम् अयम् एव अर्थः यत् यद् अस्माकं गुरुः उच्चारयेत् तत् एव वयम् अपि उच्चारयेम ?

गुरुः- सत्यम्, अयम् एव अर्थः । अपि च, स्वाध्यायस्य मुख्यः अर्थः स्वस्य अर्थात् आत्मनः अध्ययनम् अस्ति । एवं ब्रह्मरूपम् आत्मनः ज्ञातुं गुरोः चरणयोः निषीद्य वेदान्तशास्त्रस्य अध्ययनम् भवति स्वाध्यायस्य अर्थः ।

मुमुक्षुः- तर्हि गुरुदेव, किमर्थम् वयम् इदानीं "सहनाववतु" इति मन्त्रं पठितवन्तः?

गुरुः- प्रश्नस्य अस्य उत्तरं शिवावतारैः भगवानाद्यशङ्कराचार्यमहाराजैः स्वेनलिखिते कठोपनिषदः भाष्ये दत्तम् अस्ति । तत्र ते लिखन्ति यत् गुरुः शिष्यश्च, उभौ अपि मन्त्रस्य अस्य पाठेन परमेश्वरं प्रार्थयेते ।

जिज्ञासुः- तौ किं प्रार्थयेते गुरुदेव?

गुरुः- तौ प्रार्थयेते यत् परमेश्वरः अस्मासु ज्ञानं प्रकाश्य अस्मान् रक्षेत् ।

जिज्ञासुः- परन्तु, मन्त्रे अस्मिन् यत् भुनक्तु इति पदं अस्ति, तस्य कः अर्थः भवेत्?

गुरुः- भुनक्तु इति पदं संस्कृतस्य भुज् धातोः निष्पन्नम् अस्ति । भुज् धातुः परस्मैपदे आत्मने पदे च प्रयुज्यते अतः धातुः अयं उभयपदी । परस्मैपदे प्रयुक्तस्य धातोः अस्य अर्थः भवति पालनं, परन्तु आत्मनेपदे प्रयुक्तस्य अर्थः भोजनं भवति । अत्र मन्त्रे प्रयुक्तं भुनक्तु इति पदं परस्मैपदान्तम् अस्ति, अतः अस्य अर्थः भवति पालनम् । भोजनम् इति अर्थः न भवति । अतः गुरु शिष्यश्च उभौ अपि मन्त्रस्य अस्य पाठेन प्रार्थयेते यत् विद्याफलप्रदानेन ईश्वरः आवाम् पालयेत् ।

मुमुक्षुः- ततः परम् किम् प्रार्थयेते ?

गुरुः- ततः प्रार्थयेते यत् वयम् वैद्यम् सामर्थ्यम् अश्नुवीमहि । अधीतम् अस्माकं तेजस्वि स्यात् । परस्परं मा द्विषीमहि । त्रिविधः अपि तापः शाम्येत् ।

जिज्ञासुः- इ ! इदम् अस्ति कारणं , वयम् इदानीम् इमं मन्त्रं पठितवन्तः ?

मुंमुक्षुः- सत्यम् , इदानीम् अवगतम् । ... परन्तु गुरुदेव ! यत् इदं भवान् चर्चितवान् भाष्यं शिवावतारस्य भगवतः शंकराचार्यस्य, तत् कः असौ आसीत् शंकराचार्यः ? कदा च असौ अवतीर्णः अभवत् ?

जिज्ञासुः- गुरुदेव ! अवतीर्णस्य तस्य आचरितम् अपि यत् किंचित् विवृणोतु अस्मभ्यम् । किं कारणम् स जगद्गुरुः इति अभिधीयते ?

गुरुः- अद्यतनात् दिवसात् प्रायः २५०० वर्षेभ्यः पूर्वम् सनातनः अयं वैदिकः धर्मः भारते आस्कन्दितः अभवत् अवैदिकैः । तैः निराकृतं वेदप्रामाण्यम्, अनादृतः आत्मवादः , तिरस्कृताः च यज्ञादयः ।

जिज्ञासुः- अहो ! पूतायाम् अस्याम् आत्मनः भारतभूमौ एव वेदाः यज्ञाः च अनादृताः । अननुष्ठितेषु यज्ञादिषु वैदिकी वर्णाश्रमव्यवस्था एव ननु नश्यति ।

मुमुक्षुः- अमरैः अपि न आदातुं शक्यते आत्मनः यज्ञियः अंशः ।

जिज्ञासुः- तर्हि कथं सम्भवेत् वृष्टिः अपि देवानुग्रहफला ?

मुमुक्षुः- वृष्टिं विना अन्नम् अपि न उत्पद्येत ।

गुरुः- सत्यम् । तत्त्वम् इदम्, परं सुबोधम् अपि इदृशं विषयं जनाः न अवगच्छन्ति।

जिज्ञासुः- कर्तव्यं अननुतिष्ठन्तः कर्म, अलसाः प्रमादिनः च सम्पद्यन्ते । ते विषयेषु एव रममाणाः भवन्ति । ईदृशाः जनाः न भवन्ति मनुष्याः, तिर्यञ्चः सम्पद्यन्ते ।

मुमुक्षुः- एवम् .... किं ततः वृत्तं गुरुदेव?

गुरुः- अथ च, तन्त्रप्रधानः अपि युगः सः आसीत् । तन्त्रस्य याथार्थ्यम् अनवगच्छन्तः जनाः मद्यम् मांसम् मत्स्यम् मुद्रां मैथुनं च इति पञ्चमका-रादिपदार्थान् यथाकामं सेवन्ते स्म । वेदान् तिरस्कर्तुं प्रवृत्तैः तैः वैदिक्याः संस्कृतेः तत्त्वम् अपि निराकृतम्, धर्मश्च सर्वथा विरुद्धः एव उपदिष्टः ।

जिज्ञासुः- अरे रे, इदं तावत् स्वयम् एव नितरां घातकम् ।

गुरुः- तदा कर्म एव चरमः पुरुषार्थः इति मन्यमानेभ्यः वेदान् च निराकृतवद्भ्यः, उभाभ्याम् आभ्यां प्रजाः त्रातुं नितरां आवश्यकम् आसीत्, तदा एव च .....

(नेपथ्ये)

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं ।
परित्राणाय साधूनां विनाशाय च दुष्कृताम्
धर्मसंस्थापनार्थाय संभवामि युगे युगे ।। गीता ४/७-८

गुरुः- प्रतिज्ञातम् इदं स्वं सत्यं विधातुं भगवान् जगद्गुरोः आदिशङ्कराचार्यस्य रूपेण अवतीर्णः पद्भ्यामेव समग्रं भारतं वर्षं त्रिः पादचारं.......

जिज्ञासुः- कति ?

गुरुः- त्रिः पादचारं पर्यटनं विधाय वैदिकस्य धर्मस्य समेषां रूपाणां नूतनं संस्करणम् इव आचरितवान् आचार्यः ।

मुमुक्षुः- अहो, इदं तावत् आचार्येण अस्माकं महत् उपकृतम् । एवम् एव ननु?

जिज्ञासुः- सत्यम्, एवम् एव अस्ति ।

गुरुः- अस्याः एव शाङ्करपरम्परायाः फलम् अस्माकम् आचार्याः सन्ति, वयं च स्मः । अस्मात् एव हेतोः प्रणमामः वयं परम्पराम् इमां वैदिका-चार्याणां, अस्याः मंगलभारतभूमेः।

नृत्यम्

धन्या भूमिः भारतमातुः
वेदानां यत्र लभ्यते ज्ञानम्
यत्र प्रभवति ज्योतिषः ज्योतिः
ज्योतींषि च सर्वाणि समानि
श्रीशङ्करार्यस्य परम्परायाम्
परमाचार्यः चिन्मयो महान्
दयानन्दं स्वामिनं गुरुपुङ्गवम्
विदितात्मसुखं सद्गुरुं त्वं विद्धि ।।२।।
समेषां धुरंधराणां हिन्दूधर्मस्य
कुलं शिष्यप्रशिष्याणाम्
कर्मणः उपासनायाः शास्त्रज्ञानस्य च
देशे देशे करोति प्रचारम् ।।३।।
सत्यं ब्रह्म जगदस्ति मिथ्या
ब्रह्मजीवजगतामैक्यं सदा
इत्थम् उपदिशतः गुरून् निरन्तरम्
प्रणमामः वयम् शतशः कोटिशः ।।४।।

जिज्ञासुः- गुरो, वैदिकधर्मस्य संस्थापनाय भगवान् शङ्करः शङ्कराचार्यरूपेण अवतीर्णः आसीत् । किं तदर्थं केन अपि भगवान् शङ्करः प्रार्थितः?

गुरुः- पूर्वम् एव उक्तम् यत् यदा वैदिको धर्मः अवैदिकैः मतवादिभिः अभिभूयमानः आसीत्, तदा सर्वे देवाः प्रार्थयितुं परमेश्वरं शङ्करं पर्वतं केलासं अगच्छन् ।

मुमुक्षुः जिज्ञासुम्-शृणु शृणु अवधानं देहि, शङ्खध्वनिः श्रूयते मन्त्रस्य उच्चारणम् अपि श्रूयते ।

(गुरुः शिष्यौ च उभौ बहिर्गच्छतः)

(इति स्थापना ।)

***

अथ विष्कम्भकः ।

(केलासपर्वते शिवः पार्वती च आसीनौ स्तः । शङ्खः घण्टा डमरुश्च वाद्यन्ते । ब्रह्मविष्णुपुरोगाः देवाः आगत्य प्रार्थयन्ते )

सद्योजातं प्रपद्यामि सद्योजाताय वै नमो नमः । भवे भवे नातिभवे भवस्व माम् । भवोद्भवाय नमः ।

(इन्द्रादयः सर्वे देवाः शिवं साष्टाङ्गं प्रणमन्ति । सरस्वती पञ्चाङ्गं प्रणमति)

शिवः- देवाः – साधु, अद्य तावत् सर्वे अपि देवाः ब्रह्मविष्णुपुरोगाः समागताः। स्वागतम् स्वागतम् .......
विष्णुदेव ! भवान् मयि, ब्रह्मदेव ! भवान् अपि इतः आयातु ।

सर्वे देवाः- प्रणमामः वयं देवाधिदेव ।

शिवः- ब्रह्मदेव – अपि विश्वसृष्टिः भवतः कर्म निर्विघ्नं सम्पद्यते? विष्णुदेव ! सृष्टेः पालने अनुभूयते वा कः अपि आयासः? देवराज इन्द्र, भवान् वेदयतु, अपि देवाः सर्वे स्वस्य स्वस्य कर्तव्यस्य पालने निरताः सन्ति?

ब्रह्मा- चन्द्रशेखर, सर्वज्ञात् भवतः किम् ह्नुतम् अस्ति?

शिवः- सत्यम्, तथापि वदतु, कः विशेषः ?

ब्रह्मा- इन्द्रदेव वरुणदेव, वायुदेव, भवन्त एव वेदयन्तु शिवं दशां पृथिव्यां वर्तमानाम् ।

इन्द्रः- हे दिव्यमूर्ते महेश्वर, हे करुणासागर, हे भक्तभयभंजन अद्य यावत् अनेककृत्वम् वयं रक्षिताः भवता । अहर्निशं देवानां हितमेव चिन्तयन् भवति भवान् । हे दयालो भगवन्, सम्प्रति वयं महति कृच्छ्रे पतिताः स्मः ।

शिवः- अरे – कः तावत् ईदृशः संकट आपतितः येन भवन्तः सर्वे अपि तथा चिन्तया आक्रान्ताः कृताः?

वरुणः- हे प्रभो! निशि तमसा इव इयं पृथिवी सम्प्रति सनातनस्य धर्मस्य मूलभूतानि वेदशास्त्राणि विरुन्धद्भिः व्याप्ता अस्ति।

वायुः- ते वेदान् निन्दन्ति, तिरस्कुर्वन्ति, येंन केन अपि उपायेन च वैदिक सनातनधर्मस्य अनुयायिनः पथभ्रष्टान् विधाय अवैदिकं स्वं मार्गम् अभिनिवेशयितुं प्रयतन्ते।

कार्तिकेयः- अथ च भगवन्, न एतत् ते एकैकशः आचरन्ति, संघः एव एकः महान् तेषां प्रवर्तते एतदर्थम्।

ब्रह्मा- प्रभो! सर्वम् इदं परिणतम् अस्ति ब्राह्मणेषु परित्यक्तषट्कर्मसु, श्रुतिस्मृत्युदितस्नानसन्ध्यादिषु, अङ्गीकृतावैदिकमतेषु च।

विष्णुः- न एतावत् एव, अद्यतनाः राजानः अपि अवैदिकम् इदम् एषां मतम् अनुसर्तुं प्रवृत्ताः। सूर्यनारायणाय दीयमानम् अंजलिमात्रं जलम् अपि ब्राह्मणैः सम्प्रति न वितीर्यते।

ब्रह्मा- हे प्रभो! इमे निन्दन्ति वर्णाश्रमाचारविचारौ, आक्षिपन्ति च यत् वेदमन्त्राः ब्राह्मणैः स्ववृत्तये निर्मिताः इति।

वरुणः- किम् अधिकम्–ब्राह्मणशिरसां बलिदानेन भैरवं पूजयन्ति। निर्वृत्तः नैत्यिकः च अयम् आचारः।

कार्तिकेयः- सर्वस्मात् अस्मात् हेतोः विवेकवैराग्यादिभ्यः सम्पद्भ्यः विमुखाः ब्राह्मणाः स्वैरम् आचरितुं प्रवृत्ताः। एवम् उच्छिन्नायां वर्णाश्रमव्यवस्थायां कः अपि चतुर्थाश्रमी स्यात् इति कल्पयितुम् अपि कथं शक्यते?

वायुः- ये च देवार्चनादौ रताः, ते तावत् स्वशरीराणि एव विविधैः चिह्नैः अंकितानि विधातुं प्रवृत्ताः तत् एव स्वस्य पुरुषार्थस्य उपलब्धिः इति मन्यन्ते।

वरुणः- यज्ञ इति द्व्यक्षरे पदे श्रोत्रंगते एव हस्ताभ्यां कर्णौ पिदधति जनाः। ईदृशी दशा। ईदृशी जुगुप्सा तेषां यज्ञात्। सति एवं कथं वा

अनुष्ठीयेरन् यज्ञाः? अननुष्ठीयमानेषु च तेषु कथं वा वयं भ्रियेमहि, कथं च पुष्येमहि?

इन्द्रः- अतएव अहम् अपि अस्मि विपन्नः देवैः अन्यैः सह । न अस्माभिः अस्माकं विहिता यज्ञवृत्तिः लभ्यते, अतः देवैः समैः सह अहम् अपि भवन्तं शरणं प्रपन्नः अस्मि । शरणागतपरिपालकः भवान्, त्रायताम् अस्मान् प्रभो त्रायताम् ।

शिवः- हे इन्द्रदेव! हे देवगण! मा भैषुः भवन्तः । किं तेन यद् वेदान् विरुन्धानाः विजयन्ते? सपदि एव प्राप्स्यन्ति ते फलम् आत्मना आचरितस्य । आसन्नायाम् एव आयत्याम् अवतीर्णः अहं वैदिकं ज्ञानमार्गं स्थापयिष्यामि ।

इन्द्रः- सत्यं ननु ? श्रेयसे तर्हि एतत् भविष्यति ।

शिवः- परन्तु एतदर्थं वैदिकानि कर्माणि प्रतिष्ठापयितव्यानि भविष्यन्ति, यतः तानि एव वैदिकस्य ज्ञानवृक्षस्य मूलम् । एतदर्थं च सर्वै अपि देवैः अवतरितव्यम् भविष्यति ।

इन्द्रसहिताः सर्वे देवाः – भवतु, वयम् अपि अवतरिष्यामः, देवाधिदेव ।

शिवः- चतुर्भिः भुजैः अधर्मध्वंसकः विष्णुः इव अहम् अपि अवलम्ब्य चतुरः शिष्यान् पद्मपादादीन् निराकरिष्यामि अवैदिकानि मतानि ।

पार्वती- प्राणनाथ, अहम् अपि भवता सहिता पृथिव्याम् अवतरिष्यामि ।

शिवः- देवि, पर्याये अस्मिन् न एतत् शक्यम् । पृथिव्याम् अहं शङ्कराचार्यनाम्ना परिव्राजक-परिवृढः भविष्यामि, देवाश्च सर्वे अस्मिन् समुद्यमे मदीये विधातुं साहाय्यं, नररूपिणः भविष्यन्ति ।

इन्द्रः- हे शिवशंकर, सर्वे अपि देवाः वयम् उद्यताः स्मः भवतः आज्ञाम् अनुसर्तुम् ।

शिवः- इन्द्र, भवान् सुधन्वारूपेण अवैदिकमतानुयायिनां राज्ञां, कुले अवतरतु, राज्यशासनं च यथाविधि करोतु । राज्यं भवति शासति यदि पण्डितः कश्चन अवैदिकमतानुयायिनः पराजेतुं वादे आगच्छेत् तस्य साह्यं

भवान् सर्वतोभावेन आचरेत् । इत्थं भवान् अवैदिकानि मतानि विनाशयेत्।

इन्द्रः- बाढम् महादेव, आदेशं भवतः अनुवर्तिष्ये ।

शिवः- (कार्तिकेयं प्रति) - हे पुत्र कार्तिकेय, ब्राह्मणानां कुले कुमारिल भट्टरूपेण जातः त्वं सुधन्वासहायः खण्डयेः अवैदिकानि मतानि, मण्डयेः च वैदिकं कर्मकाण्डम् ।

कार्तिकेयः- तात, भवदीयः अयं पुत्रः, सदा भवतः आज्ञायाः पालने तत्परः अस्ति ।

शिवः- (ब्रह्माणं प्रति) हे चतुरानन, ब्राह्मणवंशे मंडनमिश्रनाम्ना जातः भवान् लोके वैदिकं कर्मकाण्डं प्रचारयतु । यथाविधि कर्मणाम् अनुष्ठानेन लोकस्य चित्तशुद्धिः भविष्यति, सत्यां च चित्तशुद्धौ अचिरात् एव आत्मैकत्वविद्यां लोकं प्रतिपादयिष्यामि । (सरस्वतीं प्रति) भवती अपि अवतीर्णा मण्डनमिश्रस्य भार्या भवेत् ।

सरस्वती- यथाज्ञप्तं, महादेव, सम्पादयिष्यते ।

विष्णुः- हे शंकर महादेव! इमान् तावद् भवान् कर्मसु यथायोग्यं नियुक्तवान्, न अहं किम् अपि आदिष्टः । कः नियोगः मया अनुष्ठेयः?

शिवः- हे चक्रपाणे प्रभो! इदं तावद् भवता शेषनागेन च अनुष्ठेयं यत् संकर्षणस्य पतंजलेः च रूपेण अवतीर्णौ भवन्तौ वेदस्य मध्यमं भागं योगस्य उपासनायाः च प्रतिपादकं व्यवहारयेताम् ।

विष्णुः- यथा आज्ञापयति प्रभुः ।

शिवः- (सर्वान् देवान् उद्दिश्य) भवन्तः सर्वे अपि देवाः ब्राह्मणानां कुलेषु स्वस्य स्वस्य अंशेन अवतीर्णाः सर्वत्र लोकं वेदविहितेषु कर्मसु प्रवर्तयन्तु । ज्ञानं कर्म उपासनं च इत्थं त्रिषु भागेषु विभक्तः अस्ति वेदः । त्रिषु अपि वेदभागेषु उद्धृतेषु, ब्राह्मणाः उद्धृताः भविष्यन्ति, ब्राह्मणेषु च उद्धृतेषु, जगत् एव इदं समग्रम् उद्धृतं भविष्यति, यतः कर्मणां समेषां वर्णाश्रमाणां च व्यवस्था सर्वथा वेदाधीना विद्यते ।

पार्वती- जीवः अस्मिन् मनुष्ययोनौ ब्राह्मणादिभिः विशिष्टां जनिं लभते यत्

तत् तस्य पूर्वस्मिन् जन्मनि कृतानां कर्मणां फलम् । एकः एकः अपि नरः यदि स्वस्य स्वस्य वर्णाश्रमस्य अनुरूपं कर्म अनुतिष्ठति तर्हि तेन कर्मणा भगवान् एव पूज्यते, कर्ता च मुच्यते ।

शिवः- वैदिकस्य धर्मस्य एव इदं वैशिष्ट्यं यत् अत्र स्त्रियः पुरुषाः बालाः वृद्धाः युवानः, यस्य कस्य अपि वर्णस्य आश्रमस्य वा ते स्युः, स्वस्य स्वस्य नियतानाम् कर्मणाम् अनुष्ठानेन सर्वे अपि ते मोक्षे अधिकारिणः भवन्ति ।

सरस्वती- किं स्त्रियः अपि मोक्षे अधिकुर्वन्ति? शूद्राः च?

शिवः- अवश्यम्! वैदिके धर्मे कर्माणि स्वभावप्रभवैः गुणैः यथाधिकारं यथायोग्यं प्रविभक्तानि सन्ति । स्वं स्वं कर्म कृतवान् एकैकः अपि नरः मोक्तुं शक्नोति। अतएव देवा अपि कामयन्ते जनिं भारतवर्षे । अतः सर्वे अपि वयं जायेम भारतवर्षे । भवन्तः सर्वे अपि स्वं स्वं धिष्ण्यं व्रजन्तु, यथाज्ञप्तं च अनुतिष्ठन्तु। स्वयम् अहम् अपि पृथिव्याम् अवतितीर्षुः अस्मि ।

देवाः- (सर्वे अपि) यथा आज्ञापयति महादेवः । प्रणमामः ।

समाप्तः विष्कम्भकः

***

# प्रथमोऽङ्कः

## स्थानम् - नालन्दा विद्यापीठम्

( पात्राणि : गुरुः, जिज्ञासुः, मुमुक्षुः, कुमारिलो भट्टः, अवैदिकाः शिष्याः आचार्याश्च )

प्रवेशकः

(जिज्ञासुः मुमुक्षुश्च परस्परं संवदन्तौ पार्श्वत एकस्मात् प्रविशतः)

मुमुक्षुः- युक्तियुक्तम् उपादेयं वचनं बालकादपि ।
अन्यत् तृणम् इव त्याज्यम् अपि उक्तं पद्मयोनिना।।यो.वा. २/१८/२३

जिज्ञासुः- हे विद्वन् मम मित्र, हिन्दी भाषया बोधयतु अर्थम् अस्य श्लोकस्य । पश्यतु तावत् इमान् आसीनान्, इमे सर्वे अपि अहम् इव अतज्ज्ञा एव दृश्यन्ते। तज्ज्ञो भवान्, वयम् इतः अतज्ज्ञाः, अर्थात् भवान् विद्वान् तत् जानाति, वयम् इह तत् न जानीमः अतः अतज्ज्ञाः स्मः ।

मुमुक्षुः- वदामि, वदामि, हिन्दीभाषया वदामि । श्लोकस्य अस्य अयम् अर्थः- यदि कोई बालक भी युक्तियुक्त बात कहे तो उसे मान लेना चाहिये, परन्तु बात अगर युक्तियुक्त न हो तो उसे कहने वाला यदि ब्रह्मा भी हो तो उसे स्वीकार नहीं करना चाहिये ।

(अन्यस्मात् पार्श्वतः गुरुः प्रविशति)

जिज्ञासुः मुमुक्षुश्च - प्रणमावः गुरुदेव !

गुरुः- नारायण नारायण ।

मुमुक्षुः- गुरुदेव, देवैः प्रार्थितः भगवान् स्वयम् अवतरिष्यति इति वादः किम् यथार्थः?

गुरुः- आम्, तत् एव उपकल्पयितुं कुमारः कार्तिकेयः कुमारिलभट्टरूपेण अवतीर्णः अपि अस्ति, अनेहसि च अस्मिन् सः उपगतः अपि आचार्यम् अध्येतुम् सिद्धान्ताभासान् अवैदिकान् ।

जिज्ञासुः- कुमारिलः भट्टः ? सः अपि अवैदिकानि मतानि अध्येतुं? किमर्थम् ?

गुरुः- श्रृणु-दूषणीयः विषयः निरवशेषतया ज्ञातव्यः भवति । अन्यथा धर्मविषयाणि अध्यात्मविषयाणि च प्रवचनानि निर्विशेषाणि एव भासन्ते भूयोभ्यः जनेभ्यः इति किं न दृश्यते अस्माभिः?

मुमुक्षुः- आम् - सत्यम् ।

गुरुः- अतएव प्रामाणिकम् अप्रामाणिकं च इति उभयम् अपि ज्ञातव्यमेव । एतदर्थम् एव कुमारिलः भट्टः अवैदिकं मतम् अध्येतुं गतः ।
(गुरुः शिष्यश्च बहिः निष्क्रामतः)

## दृश्यम् प्रथमम्

(नालंदा विद्यापीठस्य एकस्मिन् खण्डे आचार्यः शिष्यान् अध्यापयति)

आचार्यः- शिष्याः, दृग्दृश्यात्मकः अयम् अखिलः अपि प्रपंचः शून्यम् एव । अत्र असद् एव इदम् अग्र आसीत् इति श्रुतिः प्रमाणम् । सृष्टेः पूर्वं पश्चात् प्रलये अपि शून्यम् एव भवति यदि, तर्हि मध्ये अपि शून्यम् एव कथं न भवेत् ?

शिष्यः प्रथमः-गुरो, कथम् एतत् सम्भवति?

शिष्यः द्वितीयः-मम अपि बुद्धिं न रोहति अयं विषयः ।

आचार्यः- अहं बोधयामि युवाम् । निर्माणात् प्राक् घटः मृत् एवासीत् । निर्मितं घटं भनक्तु, नाशयतु तम्, नष्टः अपि सः मृत् एव । वदतु तावत्, कः असौ घटः नाम नाशस्य उत्पत्तेः च अनन्तरम्?

शिष्यः प्रथमः - शून्यम् एव, किम् अन्यत् ?

कुमारिलः- परन्तु गुरो, किं वेदाः अप्रमाणम् ?

आचार्यः- अरे कुमारिल, वेदानां कतिपये मन्त्राः निरर्थकाः, कतिपये मन्त्राः सन्दिग्धस्य अर्थस्य बोधकाः, अन्ये बहवः विपरीतस्य एव अर्थस्य प्रतिपादकाः, विरूद्धम् अर्थम् अपि प्रतिपादयन्तः सन्ति परस्परं मन्त्राः । एतत् सर्वम् अपि अतिशयीत यत् तत् अस्ति अनुवादकत्वम् कतिपयानाम् वेदमन्त्राणां लोकप्रसिद्धस्य एव अर्थस्य । तस्मात्

प्रमाणान्तरैः अनधिगतं कम् अपि अपूर्वम् अर्थं न वेदयन्ति वेदाः, अतः न अस्ति तेषां प्रामाण्यम् ।

शिष्यः चतुर्थः–तर्हि वेदाः प्रमाणं कथं स्युः?

आचार्यः– न स्वीकर्तुं शक्यते तेषां प्रामाण्यम् अतः एव अहं वच्मि न सन्ति वेदाः प्रमाणम् ।

शिष्यः द्वितीयः–तर्हि कः सिद्धान्तः अस्माकम् ?

आचार्यः– सर्वं क्षणिकं क्षणिकं, सर्वं दुःखं दुःखं । सर्वं स्वलक्षणं स्वलक्षणं सर्वं शून्यम् शून्यम् ।

कुमारिलः– परन्तु सर्वस्य शून्यत्वे क्षणिकत्वे वा अभ्युपगम्यमाने वेदेषु विहितानां यज्ञादीनां कर्मणां फलश्रुतेः कः अर्थः भवेत् ?

आचार्यः– वत्स कुमारिल, वेदेषु ईदृशाः असम्बद्धाः असंगताः च अनेके विषयाः प्रतिपादिताः सन्ति, अतः एव वेदाः न सन्नि प्रमाणम् ।

तृतीयः शिष्यः–सत्यम् सत्यम्, न अस्ति वेदानां प्रामाण्यम् ।

चतुर्थः शिष्यः–तथ्यम् उक्तम्, वेदाः सर्वथा कपोलकल्पिताः सन्ति ।

आचार्यः– अस्तु तावत् शिष्याः, अत्र एव अद्यतनम् अध्ययनं वृत्तं भवति ।

(उत्थाय बहिः निष्क्रामति आचार्यः)

द्वितीयः शिष्यः– अरे कुमारिल, वाष्पाविलेक्षणः असि?

तृतीयः शिष्यः– गुरुः अनिन्दत् वेदान् इति रोदिति, अन्यः वा कः अपि हेतुः?

कुमारिलः– न अस्ति अन्यः हेतुः ।

प्रथमः शिष्यः– तर्हि किम् अत्र वेदनिन्दने अस्ति हेतुत्वम् अस्य रोदनस्य?

तृतीयः शिष्यः– सत्यम्, सत्यम्, वेदाः निराकरणीयाः इति एव अस्माकं सिद्धान्तः।

चतुर्थः शिष्यः– कुमारिलः अयम् अस्मान् प्रतारयति इति प्रतिभाति माम् ।

द्वितीयः शिष्यः– सत्यम् अयम् वैदिकः प्रतिभाति ।

चतुर्थः शिष्यः– अवरुणद्धु इमम् । न पलायेत इति अवहिताः भवेयुः । नयतु इमं गुरुम् ।

प्रथमः शिष्यः– एतावन्तं कालम् अस्माभिः अधीयानः त्वं गुरुम् एव वञ्चयसि ।

(कोलाहलं श्रुतवान् आचार्यः उपसर्पति)

आचार्यः- अरे किमर्थः अयं कोलाहलः? किं वृत्तम्?

तृतीयः शिष्यः- कुमारिलः अयं कपटिकः, नैष्कृतिकः ।

चतुर्थः शिष्यः- सत्यम् कुमारिलेन अनेन द्रोहः आचरितः ।

प्रथमः शिष्यः- कुमारिलः अयं, गुरो, वञ्चकः, पाखंडी, गुरवे द्रुह्यति ।

आचार्यः- शाम्यत शाम्यत शिष्याः, किं वृत्तम्?

प्रथमः शिष्यः- गुरो, भवता कृतां वेदकुत्साम् आकर्णितवतः कुमारिलस्य अस्य शठस्य अक्षिणी पर्यश्रुणी वृत्ते ।

आचार्यः- वत्स, किम् सत्यम् अदम् ? वेदनिन्दया अर्दितस्य तव अक्षिणी गलदश्रुणी संवृत्ते?

कुमारिलः- सत्यं गुरो, अयमेव हेतुः । वेदस्य याथार्थ्यम् अविज्ञाय य एव भवान् वेदान् प्रत्याख्यातवान् ।

आचार्यः- इदम् अस्ति अत्र तत्त्वम् । अर्थात् सन् अपि मदीयः विनेयः माम् एव अधिक्षिपति? शिष्याः, श्रद्धाविष्टब्धः अयं कुमारिलः नितरां वेदेषु । विद्रावयन्तु इमं इतः विद्यालयात्।

तृतीयः शिष्यः- मा एवम्, मा एवम् अयम् इतः विद्रावितः भवेत् । एवं विद्रावितः अयं बहिर्गतः अस्मान् एव प्रत्याख्यास्यति ।

द्वितीयः शिष्यः- तर्हि का अन्या गतिः?

प्रथमः शिष्यः- दण्डनीयः अयम् ।

चतुर्थः शिष्यः- दण्डमात्रेण किं सेत्स्यति भोः, मृत्युदण्डम् अर्हति अयम् ।

कुमारिलः- मृत्युदण्डः?

प्रथमः शिष्यः- तथैव, तथैव, मृत्युदण्डः ।

तृतीयः शिष्यः- एत तावन् मित्राणि, वञ्चकम् इमम् अस्माकं विद्यालयस्य परमं पटलं नयेम, ततः च इमम् अपव्याधयेम ।

चतुर्थः शिष्यः- उचितम्, उचितम्, प्रकृष्टा इयं प्रतिक्रिया । एवम् आचरिते अयं स्वयम् एव विपत्स्यति ।

सर्वे शिष्याः संभूय- उपक्रमन्ताम्, उपक्रमन्ताम्, सर्वे अपि पटलं परमं संगच्छेमहि।

(संगताः सर्वे आकर्षन्तः कुमारिलं बलात् पटलं परमं नयन्ति । तत्र ते तम् अभ्याहन्तुं प्रवृत्ताः । कुमारिलः तत्र आत्मानम् असहायम् अवलोकयति, अतः सः वेदभगवन्तं शरणं व्रजति)

कुमारिलः- हे वेदपुरुष! भवन्तम् उद्धर्तुकामेन मया एतद् धृष्टम् । अत्र इदानीम् एतद् यशसे भवेत् अन्यथा वा सम्पद्येत इति सर्वं खलु भवति आयत्तम्। हे कैलाशनाथ! त्रायताम् कृपया स्वभक्तम् । अरे आत्ययिकाः! शृणुत तावत् मया प्रतिज्ञातम्।

सर्वे शिष्याः- भवतु, त्वरताम् तावत् । समये अस्मिन् प्रतिज्ञातं किम् आपतितं तव?

कुमारिलः- यदि वेदाः प्रमाणं स्युर्भूयात्काचिन्न मे क्षतिः ।

(भगवन्तं शिवम् एकाग्रं ध्यायति, पुनः उच्चैः उच्चारयति)

जयतु शिवः शंकरः ।

(उच्चारितमात्रे एव जयघोषे, सर्वे अपि शिष्याः संहताः आघात्य अधः पातयन्ति कुमारिलम् । परन्तु साश्चर्यं चक्षते सर्वे अपि कुमारिलं सर्वथा अपि अक्षतम् । सः च पतितः एव उत्थाय उद्धन्ति ।)

(नेपथ्ये)

जयतु जयतु, वैदिकः धर्मः जयतु, सनातनः धर्मः जयतु, कुमारिलः भट्टः जयतु ।

***

(स्थानम्- उज्जयिनी नगरी, राजप्रसादे राज्ञः सुधन्वनः सभा)

(पात्राणि-गुरुः, मुमुक्षुः, जिज्ञासुः, राज्ञी, कुमारिलो भट्टः, राजा सुधन्वा, अन्येषां च अवैदिकानां विदुषां समवायः)

(गुरुः शिष्यः च प्रविशतः)

मुमुक्षुः- मया श्रावितस्य श्लोकस्य अर्थः त्वया इदानीम् अवगतः खलु? कस्य अपि वचसः अशास्त्रीयस्य, वेदं विरुन्धतः प्रामाण्यं न

अभ्युपगन्तव्यम्, कामं वक्ता तस्य आप्ततमः भवेत्, कामम् उच्छ्रिततमे तौलिकासने आसीनः स्यात्, कामं च भूयसी संख्या भवेत् तस्य वचसाम् श्रोतॄणाम् ।

जिज्ञासुः- तथ्यम् अभिहितवान् भवान् । अशास्त्रीयम् अतर्क्यं च उपदिष्टम् आचार्यस्य न गृहीतं कुमारिलभट्टेन ।

मुमुक्षुः- इ, उच्छ्रितात् पटलात् पातितस्य अपि तस्य वेदेषु श्रद्धा अविचला एव अभवत्।

जिज्ञासुः- साधु भट्टपाद, साधु, धन्यः भवान् धन्यश्च वैदिको धर्मः । अस्तु तावत्, ततः किं वृत्तम् गुरो?

मुमुक्षुः- ततः कुमारिलभट्टे ईदृशं आपतितम्, इतः च भगवतः आज्ञया देवराजः इन्द्रः भारतस्य कर्णाटकप्रदेशे स्थितायाम् उज्जयिन्यां नगर्यां राज्ञः सुधन्वनः रूपेण अवतीर्णवान् । नृपः सुधन्वा धर्मेण प्रजाः पालयति स्म । स्वकीयां नगरीम् इतराम् अमरावतीम् इव धनधान्यप्राचुर्यपेशलाम् अकरोत्।

जिज्ञासुः- परिषदि तस्य सर्वे अपि सभासदः वैदिकाः आसन् खलु?

गुरुः- स्वयं नृपः तावत् वैदिकः आसीत्, परन्तु तस्य परिषदि केचन सभासदः अवैदिकाः अभवन् । तेषाम् अवैदिकानां वादावस्कन्देन स नितराम् अभिभूतः अभवत् । अतीते अल्पे अनेहसि कुमारिलः भग्नैकाक्षः नृपं सुधन्वानं उपागच्छत् ।

जिज्ञासुः- भग्नाक्षः । कुत्र भग्नम् तस्य अक्षि?

गुरुः- यदा ते कुमारिलम् आघात्य पटलात् उच्छ्रितात् अधः पातयन्तः आसन् तदा प्रतिजानता कुमारिलेन उच्चारितम् आसीत् – यदि वेदाः प्रमाणं स्युः इति । एवम् उच्चारणं अनिश्चयं तस्य वेदस्य प्रामाण्य-विषयकम् अभिव्यनक्ति । अनिश्चयम् एव बोधयति यदि पदम् । वेदस्य प्रामाणस्य विषये कः अर्थः अनिश्चयेन? वेदाः प्रमाणम् सन्ति एव। तथापि तेन उक्तम् यदि वेदा प्रमाणं स्युः । अतएव, वेदस्य प्रामाण्ये अनिश्चयम् आत्मनः अभिव्यञ्जतः तस्य एकम् अक्षि भग्नम्।

जिज्ञासुः- इ, अब्रह्मण्यं खलु इदं नितरां वृत्तम् ।

मुमुक्षुः- वृत्ते अपि एतावति कुतः सः प्राविशत् राजसभाम् अवैदिकैः आकुलाम्?

गुरुः- ननु सः अवतीर्ण एव आसीत् पृथिव्यां वैदिकं धर्मम् संस्थापयितुम् ।

मुमुक्षुः- तर्हि किं सर्वे अपि सुधन्वनः विषये अवैदिकाः अभवन्? किं सर्वे अपि वेदेषु आस्थापराङ्मुखाः समवर्तन्त?

गुरुः- न ईदृशं वृत्तम्। स्वयं राज्ञः सुधन्वनः महिष्याः मनः दृढश्रद्धम् आसीत् वेदेषु । अतएव हि नृपेण सुधन्वना मेलनात् पूर्वम् एव तस्य राज्ञा मेलनम् अभूत् राजप्रासादे कुमारिलस्य ।

(गुरुः शिष्यश्च बहिः निष्क्रामतः)

***

(दृश्यम् -२)

(नगर्याम् उज्जयिन्यां नृपः सुधन्वा राजसिंहासने आसीनः दृश्यते । तत्र उपविष्टाः सर्वे अपि अवैदिकाः विषयं कम् अपि परामृशन्ति । इतः राजपरिषदम् उपव्रजता कुमारिलेन राजप्रासादाभ्यन्तरात् स्वरः कस्याश्चित् स्त्रियाः श्रूयते)

राज्ञी- किं करोमि, क्व गच्छामि, को वेदान् उद्धरिष्यति?

(आकर्ण्य कुमारिलो भट्टः ततः अवलोकयति यतः अयं स्वरः श्रूयमाणः आसीत् । ततः तारेण स्वरेण प्रतिवदति)

कुमारिलः- मा विषीद वरारोहे भट्टाचार्यः अस्मि भूतले ।

(कुमारिलः राजसभां प्रति एति)

नेपथ्य -

कार्तिकेयावताराः सनातनधर्मसङ्गोप्तारः अवैदिकमत-दूषकाः महावैदिकाः श्रीमत्कुमारिलभट्टपादाचार्याः राजसभाम् इमामलङ्कुर्वन्ति समलङ्कुर्वन्ति ।

(भट्टपादः सभां प्रविशति, सादरं ससम्भावनम् उपवेश्य स्वर्णसिंहासने नृपः तं पूजयति अर्घपाद्याभ्याम्)

सुधन्वाः- भट्टपादाः! उज्जयिन्याः नृपः सुधन्वा प्रणतिपूर्वकं स्वागतम् अभिव्याहरति तत्रभवद्भ्यः ।

कुमारिलः- दीर्घायुः भव राजन्, यशस्वी भव ।

(बहिः कोकिलस्य कूजितम् आकर्ण्यते)

कुमारिलः- मलिनैश्चेन्न सङ्गस्ते नीचैः काककुलैः पिक ।
श्रुतिदूषकनिर्ह्रादैः श्लाघनीयस्तदा भवेः ।। श.दि.१/६५

सुधन्वाः- अर्थात् ?

कुमारिलः- हे कोकिल, निरीक्षतां तावत् एतस्य काककुलस्य नीचस्य मालिन्यम्, रावणं च आकर्ण्यताम्, श्रुतेः (कर्णयोः वेदस्य च) दारणम् इव । संसर्गम् अनेन यदि त्वम् अहास्यः, भद्रतरं किम् अतः अभविष्यत्?

सुधन्वाः- कः अर्थः ?

कुमारिलः- मलिनमतीन् वेददूषकान् नास्तिकान् चेत् न प्रासक्ष्यत् , भवान् अतितराम् प्रशंसनीयः अभविष्यत् ।

अवैदिकः प्रथमः- किम् अस्ति तव आत्यन्तिकं विवक्षितम् ?

कुमारिलः- मम विवक्षितं सम्यक् अवगच्छति महाराजः ।

सुधन्वाः- अवगच्छामि भगवन् । तत्र भवतः दर्शनेन अहं नितरां मुदितः अस्मि। कृतार्थः अस्मि महाराज, आदिशतु - कः नियोगः अनुष्ठीयताम् । यदर्थम् अत्र आगमनाय आयासः अङ्गीकृतः भवता, तद् वेदयन्तु कृपया । ज्ञातुं तत् नितराम् उत्सुकः अस्ति अयं दासः ।

अवैदिकः द्वितीयः- अहो, कां दशाम् आपन्ना अस्ति अस्य मतिः? ब्राह्मणम् इमं स्तौति अयम् अहो। ब्राह्मणे अस्मिन् ईदृशी चित्तवृत्तिः अस्य ? (आकाशम् उन्मुखीभूय) हे भगवन् !

सर्वेऽप्यवैदिकाः- (युगपत्) अस्मान् रक्ष । रक्ष अस्मान् ।

कुमारिलः- राजन्! भवता राज्यम् इदम् अधिगतं स्थापयितुं वैदिकं धर्मम् । एतदर्थम् एव अहं कार्तिकेयः कुमारिलः जातः अस्मि । भवान् अपि पाकशासनः नृपः सुधन्वा संवृत्तः ।

सुधन्वा- यद् वदति भवान्, तत् एव सत्यम् । अतः अतः परम् अहं हास्यामि नास्तिकं मतम्, तिरस्कर्तारम् वैदिकस्य धर्मस्य , स्वयं भगवतः वेदस्य च , रक्षिष्यामि च वैदिकं धर्मम् ।

कुमारिलः- युक्ततमम् एतद् राजन् अनुरूपम् एव भवतः ।

सुधन्वा- ततः अहं भगवन्, साहाय्यं विधातुं भवतः सर्वथा अपि प्रस्तुतः अस्मि । भवान् अपि विद्वद्भिः एभिः अवैदिकैः सह विधाय वादं दूषयतु मतम् एतेषाम् ।

अवैदिकः प्रथमः- अरे भ्रष्टकुलजातब्राह्मण ! कः तव मतः सद्धर्मः? भस्मना देहस्य उद्धूलनेन, वने वा न्युष्य शीतोष्णतितिक्षया, उपोष्य च प्राणात्ययेन यदि मुच्येत, कथं न मुच्येरन् विपिनपतिताः प्रस्तराः? प्रतार्य कृपणान् गृहमेधिनः, स्वस्य उदरपूरणाय युष्माभिः प्रवर्तितः अयं स्वैरधर्मः ।

कुमारिलः- अरे नास्तिक ! चिदचितोः ऐक्यम् अवगच्छन्तः त्वादृशाः जडाः एव सन्ति।

अवैदिकः तृतीयः- त्वादृशाः एव ब्राह्मणाः मिष्टान्नम् अभिलाषिणः श्राद्धमिषेण तर्पयन्ति रसनाम् आत्मनः, वदन्ति च श्राद्धं तर्पणं पितृणाम् । श्राद्धेन पितरः तृप्यन्ति इति वादः यदि स्याद् यथार्थः, कथं न दीपयति स्नेहनिषेकः निर्वाणं प्रदीपम् ?

कुमारिलः- अरे कुतार्किकाः ! यज्ञः, श्राद्धम्, तपः प्रभृतीनि सर्वाणि अपि श्रेयः साधनानि वेदैः एव विधीयन्ते । प्रामाण्यं च वेदानां स्वतः एव । अतएव यावत् वेदानाम् अप्रामाण्यं न साध्येत भवद्भिः, तावद् वेदैः विहितानां कर्मणाम् अप्रामाण्यं प्रतिपादयितुं कथं शक्यते? अतः शक्तिः चेत् प्रतिपादयन्तु प्रथमं वेदानां अप्रामाण्यम् ।

अवैदिकः चतुर्थः- भोः ! वयं स्मः वेदानां पादाघातुकाः, यतः ते अनृतमेव प्रतिपादयन्ति, नान्यत् किम् अपि, ऋते अनृतात् ।

अवैदिकः द्वितीयः-परन्तु यदि तत् तव मतम्, तर्हि त्वया एव प्रतिपाद्यताम् वेदप्रामाण्यम्। किम् अखिलः वेदः प्रमाणम् उत खिलः अंशः अस्य कश्चित् ?

कुमारिलः- अरे मूढ, न वेत्सि वेदानाम् आनन्त्यम् । तेषु प्रतिपादितस्य प्रामाण्यं प्रतिपादयितुं जनितव्यं भविष्यति असंख्यातम् ।

अवैदिकः प्रथमः- रहतु अखिलस्य वेदस्य प्रामाण्यस्य प्रतिपादनम् । कस्य अपि एकस्य एव तस्य अंशस्य प्रामाण्यं प्रतिपादयतु । तेन एव अखिलस्य वेदस्य प्रामाण्यं प्रतिपादितं भविष्यति इति मन्यामहे । अत्र तण्डुलम् एव निदर्शनम् । तण्डुलस्य एकस्य एव परीक्षणेन तण्डुलानां समेषां श्रृतिः परीक्षिता भवति न वा? तथा एव अत्र अपि वेदस्य कस्य अपि एकस्य एव अंशस्य प्रामाण्यस्य साधनेन अखिलस्य एव वेदस्य प्रामाण्यं साधितं भविष्यति एव ।

कुमारिलः- (संतुष्य) हे नास्तिकाः! पश्यन्तु तावत्, जितम् मया । (राजानम् उद्दिश्य) राजन्! मध्यस्थेन भवता निर्णयः करणीयः भविष्यति । एषः अहम् इमान् विजये । हे वेदनिन्दकाः! यं वेदमन्त्रम् अहम् इदानीम् उद्धर्तुं प्रवृत्तः अस्मि तस्य अर्थं किञ्चित् अवदद्ध्वम् ।

अवैदिकः चतुर्थः- वदतु वदतु, क्षिप्रं वदतु - सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ईदृशः तव ईश्वरः । किम् अन्यद् वक्तव्यं भविष्यति तव, ऋते ईदृशात् असम्बद्धात् प्रलापात् ।

(अतः परम् अपि वादः प्रवर्तमानः अस्ति)

***

प्रवेशकः

(एकतः वादः प्रवर्तते । अन्यतः गुरुः शिष्यश्च संलपन्तौ दृश्येते)

मुमुक्षुः- गुरो, अवैदिकाः पण्डितम्मन्यमाना इमे कथम् इव परिभवन्ति वेदान्? ननु वेदानां निन्दा न अस्माभिः श्रोतव्या?

गुरुः- वेदनिन्दा न श्रोतव्या । अतः एव अनाकर्ण्य तेषां वादं, परिणाममेव तस्य प्रतिपत्तुं प्रयतेमहि ।

जिज्ञासुः- बाढम् गुरो, अवैदिकैः सह प्रवृत्तस्य कुमारिलभट्टपादस्य वादेन किं परिणतम् ?

गुरुः- वादस्य अवसाने कुमारिलभट्टपादेन जितम् । अवैदिकाः च पराजिताः।

मुमुक्षुः- किं पराजयः अयम् अभ्युपगतः अभवत् अवैदिकानां पण्डितम्मन्यानाम्, राज्ञः सुधन्वनः च?

गुरुः- किं ते अन्यत् अकरिष्यन् ? सुधन्वा नृपः तावद् वैदिकः एव आसीत् अतः तेन सानन्दं भट्टपादस्य जयघोषः कारितः । एत, वयम् अपि शृणुयाम जयघोषम्।

(गुरुः शिष्यश्च बहिः निष्क्रामतः)

***

दृश्यम् - तृतीयम्

सुधन्वा- अहह! हे नारायण, हे पुराणपुरुषोत्तम! वैदिकं धर्मं रक्षितुं भवता धर्मोद्धारकः भट्टपादः यशस्वीकृतः । सत्यः वैदिकः धर्मः इति सिद्धम् । सर्वम् अन्यत् अवैदिकम् अनृतम्, कपोलकल्पितम् ।

प्रधानः- सनातनस्य वैदिकधर्मस्य जयः अस्तु । कुमारिलभट्टपादस्य जयः अस्तु। राज्ञः सुधन्वनः जयोऽस्तु ।

सर्वे ब्राह्मणः- वैदिकधर्मस्य जयः अस्तु ।

(जयघोषः प्रवर्तते , मंगलवाद्यानि वाद्यन्ते)

अवसितः वैदिकधर्मविजयनामकः प्रथमोऽकः ।

***

# द्वितीयोऽङ्कः
## स्थानम् गुरुकुलम्

(पात्राणि - गुरुः, जिज्ञासुः, मुमुक्षुः, आचार्यः शङ्करः, माता, ब्राह्मणी, लक्ष्मीदेवी, ब्रह्मचारीगणः बान्धवाश्च)

(प्रवेशकः)

(गुरुः शिष्यश्च प्रविशतः)

गुरुः- शिवपुत्रः कार्तिकेयः कुमारिलभट्टपादरूपेण अवतीर्य वेदभागं कर्मकाण्डं प्रत्यतिष्ठिपत्।

जिज्ञासुः- कः अर्थः सिद्धः अनेन गुरुदेव?

गुरुः- अवाप्तः अयम् अर्थः-धर्मनाम्ना कर्तव्यत्वेन वेदेषु पुराणेषु च विहितानां व्रतजपदानतपपूजनादिकर्मणाम् अनुष्ठाने लोकाः प्रवृत्ताः अभवन्। अन्नवस्त्रनिवासादिविषयभोगचिन्तनपरा अपि धर्माधर्मपापपुण्यपरामर्श-परायणाः समपद्यन्त।

मुमुक्षुः- ततः किम्?

गुरुः- जनाः तेषाम् अहितकरं अधर्माचरणं पापाचरणं च अजहुः, सकल-कल्याणकरस्य धर्मस्य पुण्यस्य च आचरणे प्रावर्तन्त।

जिज्ञासुः- परन्तु गुरुदेव, सामान्याय जनाय तावत् पानाशनादयः विषयाः एव रोचन्ते। शुभकर्मभिः पुण्यकर्मभिः वा तस्य कः अर्थः?

गुरुः- अवधत्स्व, एकैकः अपि जनः अन्नवस्त्रादि यदपि भोगसाधनं लभते, तत् सर्वं पूर्वस्मिन् जन्मनि तेन कृतानां शुभकर्मणां फलम् एव। शोभनं चेत् वयम् आचरिष्याम शोभनमेव फलम् अलप्स्याम। अशुभं चेत् आचरिष्याम अशुभम् एव तत्फलम् अवाप्स्याम।

मुमुक्षुः- अहो-इदं तावत् अत्र आकूतम् यत् रोचमानान् विषयान् अवाप्तुम् इच्छन्ति जनाः, परन्तु तस्य अवाप्तेः साधनम् अस्ति शुभं कर्म इति न विदन्ति। विदन्तः च ते तस्मिन् न प्रवर्तन्ते।

जिज्ञासुः- तथा एव आत्मनः प्रतिकूलात् जनाः मुमुक्षन्ते परन्तु यस्य अशुभकर्मणः फलं भवति तत्, तत्र तित्यक्षन्ति अशुभं कर्म । एवम् एभिः, ऋणं कृत्वा घृतं पिबेत् इति न्यायम् अनुसरद्भिः, यथा कथंचिद् उल्लासविलास एव रन्तव्यम्।

गुरुः- इदम् अपि अत्र अवधेयम्, निष्क्रियस्य रिरंसा एव अधर्मम् अनीतिम् पापप्रभृतीन् अन्यान् अशुभान् जनयति ।

मुमुक्षुः- ननु अतः एव कुमारिलभट्टपादाः जनान् शुभे कर्मणि प्रवर्तयामासुः येन जनैः शुभम् एव फलं प्राप्येत ।

जिज्ञासुः- परन्तु अत्र वेदानां किम् प्रयोजनम् ?

गुरुः- ननु शृणोतु, किं शुभम् अशुभं वा कर्म? कस्मिंश्चित् अपि वर्णे आश्रमे वा स्थितस्य एकैकस्य नरस्य किं कर्तव्यम्, कस्य फलस्य प्राप्तये च किं आचरणीयम् इति सर्वे एव विषया वेदैः एव वेद्यन्ते । अत्र एव वेदाः प्रमाणं भवन्ति ।

मुमुक्षुः- अथ च कुमारिलभट्टपादाः जनान् वेदेषु श्रद्धावतः कृतवन्तः ।

जिज्ञासुः- सत्यम् – पानाशनादिकेषु विषयविलासेषु एव रममाणान्, तेषु एव श्रद्धावतः जनान् धर्मे, वैदिकेषु कर्मसु वर्णाश्रमाचारेषु प्रवर्तयामासुः।

गुरुः- एवं सम्पादितायां भूमिकायां, प्रतिष्ठापयितुं ज्ञानकाण्डं वेदानाम् अवातरत् बालशंकररूपेण भगवान् शङ्करः । दक्षिणस्यां दिशि सुदूरे भारतीये केरलप्रदेशस्थे कालटीग्रामे नंबूदरीब्राह्मणानां कुले पितुः शिवगुरोः मातुः च आर्याम्बायाः प्रादुरभवत् आचार्यः शङ्करः । तृतीये वर्षे प्रविशता एव तेन आत्मनः मातृभाषायां मलयालमेति प्रथितायाम् आधिपत्यम् अधिगतम्। वयसि आद्ये एव पिता तस्य दिवंगतः ।

जिज्ञासुः- शङ्करस्य पिता दिवंगतः? तर्हि उपनयनादयः संस्काराः कथं निर्वर्तिताः?

गुरुः- पत्यौ पंचत्वं गते अपरिहीणधृतिः जननी शङ्करं पञ्चवर्षीयम् उपनयनेन संस्कारितवती । अध्येतुं च वेदान् प्रहितवती तं गुरुकुलाय ।

(गुरुः शिष्यश्च बहिः निष्क्रामतः)

## दृश्यम् प्रथमम्

(गुरुकुले वृक्षस्य एकस्य अधः उच्छ्रिते एकस्मिन् धिष्ण्य आचार्यः आस्ते । समक्षं ब्रह्मचारिवृन्दः वर्तते । गुरुः तैः उच्चारयति ।)

आचार्यः:- ईशावास्यमिदं सर्वम्

शिष्यगणः:- ईशावास्यमिदं सर्वम्

आचार्यः:- यत् किञ्च जगत्यां जगत्

शिष्यगणः:- यत् किञ्च जगत्यां जगत्

आचार्यः:- तेन त्यक्तेन भुञ्जीथाः

शिष्यगणः:- तेन त्यक्तेन भुञ्जीथाः

आचार्यः:- मा गृधः कस्यस्विद्धनम्

शिष्यगणः:- मा गृधः कस्यस्विद्धनम्

आचार्यः:- मन्त्रे अस्मिन् ईशावास्योपनिषदः प्रतिपाद्यते सकलसंसृतेः आच्छादनम् ईश्वरेण। अर्थात् सर्वम् खलु इदं ईश्वरः इति बुद्ध्या अवलोकनीयम् ।

शंकरः:- गुरो ! सर्वत्र ईश्वरस्य दर्शनं कथं सम्भवेत् ?

गुरुः:- यथा सर्वेषु घटेषु मृदः दर्शनं सम्भवति तथा एव?

शिष्यः प्रथमः:- परन्तु गुरो, मृत् तावद् घटेषु दृश्यते, ईश्वरः कुत्र दृश्यते ?

गुरुः:- तेन त्यक्तेन भुंजीथाः - घटं द्रष्टुं त्यक्ष्यसि चेत् एव मृत् दृष्टा भविष्यति । तथैव सर्वं त्यक्ष्यसि चेत् एव ईश्वरः दृष्टः भविष्यति । मृत् यथा घटस्य आत्मा तथा एव ईश्वरः अपि, सर्वस्य, मम अपि आत्मा अन्तर्यामी अस्ति ।

शिष्यः द्वितीयः:- परन्तु गुरो, सर्वं कथं त्यजेम?

आचार्यः:- प्रथमं तावत् दृढया भावनया सर्वत्र ईश्वरस्य दर्शनस्य अभ्यासः करणीयः।

शिष्यः:- ततः?

आचार्यः:- ततः संन्यस्य आंत्मनः स्वरूपं रक्षणीयम् । अतएव शास्त्रैः संन्यासः विहितः।

शंकरः- परन्तु गुरो, पूर्वं तावद् भवान् शिक्षितवान् यद् वेदेषु चत्वारः आश्रमाः विहिताः । पूर्वं ब्रह्मचारी भवेत्, ततः गृहस्थः, ततः वानप्रस्थः ततः अन्ते संन्यस्येत्, यतः वेदेषु आश्रमाणाम् अयम् एव क्रमः ।

आचार्यः- सत्यं वत्स, तथा एव अहम् उक्तवान् ।

शिष्यः चतुर्थः-परम् इदानीम् अतिक्रम्य एव तत्, उपदिश्यते संन्यासः ।

आचार्यः- सत्यम्, एतत् अपि युक्तम् एव ।

शिष्यः पञ्चमः- किं तर्हि वादौ इमौ न मिथः विरुन्धाते?

आचार्यः- न, विधिमूलकत्वाद् मम वचनस्य । उभयथा विधिः उपलभ्यते । विधिः च अधिकारिणम् अपेक्षते, अत उभौ अपि विधी न एकम् एव अधिकारिणं विषयीकुरुतः। भिन्नयोः द्वयोः अधिकारिणोः द्वौ विधी भवतः ।

शिष्यः प्रथमः-भिन्नयोः? कतरः तर्हि कतरस्मिन् अधिकरोति?

आचार्यः- यस्य चित्तं शुद्धम् स ब्रह्मचारी अतिक्रम्य एव आश्रमौ मध्यगतौ संन्यसितुम् अर्हति। अशुद्धचित्तः तावद् क्रमशः एव आश्रमात् आश्रमं गतः संन्यासस्य अधिकारी भवति।

शङ्करः- एवं तर्हि गुरो, द्वौ तावत् अधिकारिणौ वेदेषु वर्णितौ उपलभ्येते?

आचार्यः- सत्यम् शङ्कर, द्विविधः हि वेदोक्तः धर्मः, प्रवृत्तिलक्षणः निवृत्तिलक्षणः च, तस्य अधिकारिणा अपि द्विविधेन एव भवितव्यम् । अहो ईदृशः अस्माकं सनातनधर्म इदानीं शिथिलायते । न का अपि व्यवस्था आश्रमस्य वर्णस्य वा दृश्यते ।

(सावधानेन मनसा शङ्करः संवादम् इमम् आकर्णयन् आसीत्)

शङ्करः- गुरो, अहं संन्यसिष्यामि । (किञ्चिद् विचार्य) गुरो, अस्ति वा कश्चित् उत्तमः वैदिकः संन्यासी कुत्र अपि पृथिव्याम् ?

आचार्यः- आम् अस्ति । योगसूत्राणां प्रणेता महाभाष्यकारः भगवान् पतञ्जलिः एव गोविन्दपादाचार्यरूपेण अवतीर्णः । नर्मदायाः तटे कन्दरायाम् एकस्यां समाधिस्थस्य तस्य वर्षसहस्रम् अतिक्रान्तम् । अनेन

गोविन्दपादाचार्येण सदृशः महात्मा वैदिकसंन्यासपरम्परायां सुदुर्लभः एव ।

शंकरः- गुरो, अहम् उपैष्यामि गोविन्दाचार्यम्, ग्रहीष्यामि च प्रव्रज्याम्, तेन च उद्धरिष्यामि नश्यन्तं सनातनं वैदिकधर्मम् ।

आचार्यः- दुरुद्धरः तावद् वैदिकः धर्मः, तथापि अध्यवसायेन तव सम्भविष्यति।

शंकरः- "अहं संन्यासी भविष्यामि" अहं सनातनं वैदिकं धर्मम् उद्धरिष्यामि।

(द्वे अपि वाक्ये द्विकृत्वम् उच्चार्येते)

आचार्यः- सन्तुष्टः अहं शंकर । आशिषा अनुगृह्णामि त्वाम् । यथार्थं भूयाः सर्वशिवंकरः यतिः, विश्वस्मिन् च अखिले प्रवर्तयेः जयघोषं सनातनस्य वैदिकधर्मस्य। यशस्वी भव ।

शिष्यगणः- वयमपि शङ्करस्य सहायाः भविष्यामः । सर्वे अपि वयम् सेविष्यामहे सनातनं वैदिकं धर्मम् ।

आचार्यः- प्रसन्नः अस्मि युष्माकं भावेन । ब्रह्मचारिणः, वृत्तम् अत्र एव अध्ययनम् अद्यतनम्। अतः परम् भिक्षाम् अटितुं शक्नुथ ।

शिष्यगणः- यथाज्ञापयति गुरुदेव !

(सर्वे शिष्याः दण्डवत् प्रणमन्ति)

***

## दृश्यं -२

(सर्वे ब्रह्मचारिणः भिक्षामटितुं निष्क्रामन्ति । एकैका कन्था, भिक्षायै निर्मिता, तेषां सर्वेषां स्कन्धान् अवलम्बते । भिक्षास्वरः सर्वेषाम् अपि सर्वतः पृथक् पृथक् पदेभ्यः श्रूयते)

शिष्य १:- भवति भिक्षां देहि ।

शिष्य २:- भवति भिक्षां देहि ।

शिष्य ३:- भवति भिक्षां देहि ।

(भिक्षार्थं शङ्करः एकस्याः ब्राह्मण्याः गृहं गच्छति शङ्करस्य स्वरम् आकर्ण्य ब्राह्मणी बहिः निष्क्रामति । गृहस्य अजिरे आमलकवृक्षः

एकः स्थितः दृश्यते)

शंकरः- भवति भिक्षां देहि ।

(ब्राह्मणी निष्क्रम्य बहिः गृहात्, अवलोक्य च पुरतः स्थितं तेजस्विनं ब्रह्मचारिणं, सम्मार्ष्टि गलन्ति अश्रूणि)

शंकरः- अम्ब, कथम् अश्रुस्राविणी अक्षिणी?

ब्राह्मणीः- न अस्ति कः अपि विशेषः पुत्र, किम् अपि न अस्ति ।

शंकरः- मम अम्बा एव भवती । वेदयतु तावद् रोदनहेतुम् ।

ब्राह्मणीः- ब्रह्मचारिन्, हतभाग्याः वयम् । धिक् अस्मान्, निरर्थकम् अस्माकं जन्म।

शंकरः- किमर्थम् अम्ब एवं ब्रवीति भवती?

ब्राह्मणीः- वत्स, तुभ्यम् अहं भैक्षम् प्रतिपित्सामि, परन्तु किम् अहं प्रतिपादयेयम्?

(रुदन्ती गृहं प्रविशति, तत एकम् आमलकम् आनीय ददाति । मुखेन च अवनतेन रुदन्ती तिष्ठति । तुभ्यं प्रतिपादयितुं शक्येत ईदृशं किम् अपि वस्तु मम गृहे न अस्ति, ऋते अस्मात् आमलकात् ।)

शंकरः- निमील्य चक्षुषी, सावधानः साञ्जलिबन्धं प्रार्थयते -

अङ्गं हरेः पुलकभूषणमाश्रयन्ती
भृङ्गाङ्गनेव मुकुलाभरणं तमालम् ।
अङ्गीकृताखिलविभूतिरपाङ्गलीला
माङ्गल्यदाऽस्तु मम मङ्गलदेवतायाः ।।

(क्षणेन एव अम्बा लक्ष्मीः प्रादुर्भवति)

लक्ष्मीदेवीः- वत्स, किमर्थम् अहं स्मृता त्वया?

शंकरः- मातः, कृपताम् इमाम् ब्राह्मणीं भवती ।

लक्ष्मीदेवीः- परन्तु, ब्राह्मणी इयं पूर्वस्मिन् भवे किम् अपि सत्कर्म न आचरितवती, कथं तर्हि इयं कृप्येत ?

शंकरः- हे मातः, सत्यम् इयं भवे पूर्वस्मिन् किम् अपि सत्कर्म न अनुष्ठितवती, परम् इदानीम् एव इयम् इदम् आमलकं मह्यं दत्तवती अस्ति । अस्य एव सत्कर्मणः फलदानेन इमाम् अनुगृह्णातु भवती ।

लक्ष्मीदेवीः- तथास्तु ।

शंकरः- भवति भिक्षां देहि ।

(इति उदीरयन् अन्यत्र अपैति । भिक्षाशब्दः अपि तेन उच्चार्यमाणः क्रमशः स्फुटात् अस्फुटः, अस्फुटतरः ततः अस्फुटतमः च जायते । इतः ब्राह्मण्याः अजिरे स्वर्णामलकवृष्टिः भवति ।)

ब्राह्मणीः- अरे ओ ब्रह्मचारिन्, अरे ओ ब्रह्मचारिन् । तव अनुग्रहेण मम अजिरे स्वर्णामलकमयी वृष्टिः भवति । देवः स्वर्णामलकान् वर्षति । कनकधारा इयं मम गृहे, कनकधारा ।

(अध्ययनं सम्पाद्य ब्रह्मचारिगणः स्वं स्वं गृहं गच्छन्ति)

(नेपथ्ये)

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। (तै. उप. १/३७)

***

## ( स्थानम् शंकर गृहम् )

(पात्राणि – गुरुः, जिज्ञासुः, मुमुक्षुः, शङ्करस्य मित्रं प्रज्ञानः, आर्याम्बा, शङ्करः, केरलनरेशः, राजशेखरः, महामात्यः सुमतिः, सम्बन्धिगणः, आर्याम्बायाः सखी सावित्री च)

प्रवेशकः

(गुरुः शिष्यः च प्रविशतः)

मुमुक्षुः- गुरो, किमर्थम् उपनयनेन संस्क्रियते?

गुरुः- उपनयनसंस्कारेण एव ब्रह्मक्षत्रविशः भवन्ति द्विजाः । द्विजाः एव अधिकारिणः गायत्रीमन्त्रजपस्य । द्विजाः एव भवन्ति अधिकारिणः उपास्य त्रैकालिकीं सन्ध्यां वेदम् अध्येतुम् ।

जिज्ञासुः- परन्तु गुरुदेव, ईदृशः कः अपि नियमः कुत्र अपि न दृश्यते खलु। सार्ववर्णिकाः सार्वजातीयाः च स्त्रियः पुरुषाः च गायत्रीमन्त्रं जपन्तः अवलोक्यन्ते। ते न केवलं जपन्ति, तौर्यत्रिकेण सतारं गायन्ति अपि।

गुरुः- शृणोतु तावत्। गायत्रीमन्त्रः अयं वैदिकः। न अयं रागबद्धं विधाय गेयः। मन्त्रस्य अस्य विशिष्टः विधिः – कथम् अयम् उच्चारणीयः इति।

जिज्ञासुः- अपि अस्ति त्रिकालसन्ध्याः विधिः?

गुरुः- त्रिकालसन्ध्यायाः? सम्पादिते उपनयने, अधिगते च वेदाध्ययनाधिकारे दिवसे त्रिकृत्वम् प्रातः मध्याह्ने सायं च संधिसमये यत् इदं प्राणायामः, आचमनं, अघमर्षणम् सूर्यार्घः सूर्योपस्थानं गायत्रीजपः च इति यथाविधि अनुष्ठीयते, तत् त्रिकालसन्ध्या इति उच्यते।

मुमुक्षुः- ननु एवं गुरुदेव, सन्ध्योपासनस्य वैदिकः विधिः? तर्हि अन्ये केचन संस्कृतस्य कतिपयानां श्लोकानां पाठमात्रं त्रिकृत्वं यत् कुर्वन्ति, तत् न त्रैकालिकी सन्ध्या किम्?

गुरुः- न, कतिपयानां श्लोकानाम् उच्चारणं स्तुतिः प्रार्थना वा भवति। यद्यपि स्तुतिः प्रार्थना वा अपि प्रशस्ता एव, तथापि द्विजैः तु वैदिकम् एव सन्ध्योपासनं विधेयम्।

जिज्ञासुः- तर्हि उपनीतः शङ्करः किमर्थं गुरुकुलं गतः?

गुरुः- मुमुक्षो, गुरूपसत्तिः अस्ति अस्माकीना वैदिकी परम्परा। गुरुकुले ब्रह्मचर्येण वसन् बालकः विषयैः विविधैः अनाकृष्टः मनसा अवहितेन अध्येतुं शक्नोति। साम्यं सामञ्जस्यं च सम्पादयितुं शक्नोति। स्वाधीनवृत्तिः भवितुं शक्नोति। सेवितुं शिक्षते। गुरुं च सेवमानः स नम्रतागुणेन गुणवान् भवति।

मुमुक्षुः- अहो ननु अयम् अस्ति हेतुः, शङ्करः अध्येतुं गतः गुरुकुलम्।

जिज्ञासुः- न केवलं गतः, अध्ययनं सम्पाद्य एतावता निवृत्तः अपि सः।

(गुरुः शिष्यश्च बहिः निष्क्रामतः)

## दृश्यम् - ३

(शङ्करस्य मित्रं प्रज्ञानः महता संरम्भेण शङ्करस्य गृहम् उपयाति, शंसति च शङ्करमात्रे शङ्करस्य आगमनम्)

प्रज्ञानः- अम्ब, अम्ब, बहिः तावत् ऐतु क्षिप्रम्। पश्यतु ननु इमम्, कः अयम् आगतः।

माता- कः अस्ति पुत्र? ननु त्वम् एव वेदय।

प्रज्ञानः- मैवं मातः, बहिः इता स्वयम् एव अवलोकयेत् भवती।

(माता बहिः निष्क्रान्ता प्रज्ञानं पश्यति)

माता- अहो प्रज्ञान, त्वम् असि! कदा आगतः असि? कुत्र अस्ति मम शङ्करः?

(तावता शङ्करः प्राप्नोति)

शंकरः- प्रणमामि अम्ब (साष्टाङ्गं प्रणमति। प्रज्ञानः अपि प्रणमति। माता उभौ उत्थाप्य वक्षसा परिष्वजते, आत्मनः अनुरागं दर्शयति, शिरसि च जिघ्रति)

माता- आगतः असि वत्स?

शंकरः- आम् अम्ब! गुरुकुले अध्ययनं सम्पाद्य एषः अहं निवृत्तः अस्मि।

माता- वत्स शङ्कर! किम् किम् अधीतवान् असि गुरुकुले?

प्रज्ञानः- मातः, शङ्करेण सर्वाः अपि विद्याः अधिगताः, ताः अपि सरहस्याः। सर्वाणि शास्त्राणि शङ्करस्य ज्ञातानि सन्ति।

माता- सत्यम् ?

प्रज्ञानः- मातः, शङ्करः हि आयुषः सप्तमे एव वर्षे सर्वासां श्रुतीनां पारदृश्वा विद्वान् संवृत्तः।

माता- अहो, मम एषः प्रियः पुत्रः संवृत्तः ईदृशः महान् विद्वान् ?

प्रज्ञानः- मातः, स्वयं लक्ष्मीः एकदा प्रादुर्भूता शङ्करेण प्रार्थिता।

माता- अहो भाग्यम्, ततः?

प्रज्ञानः- ततः किम् ? ततः शङ्करेण प्रार्थिता लक्ष्मीदेवी कस्याश्चित् एकस्याः

विपन्नायाः ब्राह्मण्याः गृहे स्वर्णामलकानि वर्षितवती ।

माता– अहो दयालुता मम पुत्रस्य, साधु पुत्र साधु ।

शंकरः– अम्ब, अतः परम् अत्र एव अध्यापयिष्यामि मम सर्वाणि मित्राणि शास्त्राणि ।

माता– साधिष्ठम् एतद् भविष्यति वत्स । त्वम् अतः परम् आलप मित्रैः, तावता अहम् अवगाह्य नद्यां निवृत्ता भवामि ।

(आर्याम्बा, वस्त्राणि आदाय आत्मनः स्नातुं गच्छति । शङ्करः स्वीयैः मित्रैः गृहस्य अभ्यन्तरं गच्छति । कस्यचित कालस्य अवन्तर गृहात् निष्क्रम्य पथि दृष्टिं पातयति। एतावता अपि अम्बा निवर्तमाना न दृश्यते । अतः सः चिन्ताकुलः भवति ।)

शंकरः– अम्बा स्नातुं गता अस्ति, न एतावता कालेन अपि निवृत्ता । किं कारणं स्यात् ? (आकाशं दृष्ट्वा)अहो ललाटंतपः सूर्यः । कः अपि अपायः न आपतितः भवेत् मातरि । भवतु, किञ्चिद् दूरं गतः तावत् पश्यामि ।

(मित्रैः सह शङ्करः सरितः अभिमुखं प्रतिष्ठते । पथि पश्यति आतपेन मूर्तां मातरम्। धावन् मातरम् उपैति। )

शंकरः– अम्ब अम्ब, किं वृत्तं त्वयि? कथं पतिता असि? अम्ब किम् न प्रतिवदसि? हा हन्त, माता मूर्ता इव भाति ।

(अभ्युक्ष्य अम्भसा चेतयितुं तां प्रयतते । अल्पेन एव अनेहसा चेतति कथंचित् अम्बा। तत्र समेतानां साहाय्येन मातरं गृहम् आनयति शङ्करः ।)

(तस्मिन् एव अहनि आरात्रि जागरूकः शङ्करः कुलदेवम् आत्मनः श्रीकृष्णं प्रार्थयते)

अच्युतं केशवं रामनारायणं
कृष्णदामोदरं वासुदेवं हरिम् ।

श्रीधरं माधवं गोपिकावल्लभं
जानकी नायकं रामचन्द्रं भजे ।।१।।
कृष्ण गोविन्द हे रामनारायण
श्रीपते वासुदेवाजितश्रीनिधे ।
अच्युतानन्द हे माधवाधोक्षज
द्वारकानायक द्रौपदीरक्षक ।।४।।
कुञ्चितैः कुन्तलैर्भ्राजमानाननं
रत्नमौलिं लसत्कुण्डलं गण्डयोः ।
हारकेयूरकं कङ्कणप्रोज्ज्वलं
किङ्किणीमञ्जुलं श्यामलं तं भजे ।।८।।
हरे राम हरे राम राम राम हरे हरे
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ।
हरे राम हरे राम राम राम हरे हरे
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ।। (अच्युताष्टकम्)

शंकरः- हे प्रभो, नितरां निर्बला अस्ति मम माता । स्नानाय नदीं यावत् उपक्रमणेन सा नितरां क्लिश्यते । प्रार्थये अहं त्वां सरित् इयं यथा मम उपगृहं वहेत् तथा विधेहि । हे दीननाथ हे दयालो, हे भक्तवत्सल शृणु मम प्रार्थितम्।

श्रीकृष्णः- (अदृश्यः श्रूयते) बाल्ये अपि समेषां हितं कामयमानस्य कामः अवश्यं श्वः प्रातः रातः भविष्यति ।
हरे राम हरे राम राम राम हरे हरे ।
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ।।
मन्त्रे अस्मिन् संकीर्त्यमाने, परिवर्त्य स्वस्याः प्रवाहं शङ्करस्य उपगृहं, प्रवहन्ती नदी दृश्यते ।
(द्वितीये दिवसे माता स्नातुं निष्क्रामति)

माता- अहो, अद्य गृहस्य पुरस्तात् एव द्रवति नदी । महत् इदम् अद्भुतं

कथं वृत्तम्? शङ्कर, भो शङ्कर, पश्यतु तावत् आगत्य इतः, उपगृहम् अस्माकं नदी वहति ।

शंकरः- ओम् मातः - ह्यः त्वं मूर्च्छां गता, अतः नदी इयम् अस्माकम् उपगृहम् एव आगता।

प्रज्ञानः- मातः, ह्यस्तनीं निखिलामेव निशां शङ्करः भगवन्तं प्रार्थितवान् । प्रार्थना च अस्य भगवता श्रुता, येन इयं नदी गृहम् अस्माकम् उपगता ।

माता- सत्यं वत्स, तव इदं प्रार्थनायाः फलम् । अहो मम प्रियः शङ्करः, मातरि आत्मनः कियान् अवेक्षमाणः अस्ति (वक्षसा शङ्करमाश्लिष्य) वत्स, शं विदधातु भगवान् तव ।

(नेपथ्ये)

देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव। आचार्यदेवो भव । अतिथिदेवो भव । (तै. उप. १-१९)

(सर्वे निष्क्रामन्ति)

***

प्रवेशकः

(गुरुः, जिज्ञासुः मुमुक्षुश्च प्रविशन्ति)

गुरुः- एकदा केरलनरेशस्य मन्त्री सुमतिः प्रभूतेन उपायनेन उपासदत् आर्याम्बाम् ।

जिज्ञासुः- एवं खलु? किम् अर्थम् आगतवान् सः?

गुरुः- शङ्करस्य अलौकिकं चरित्रम् वैदुष्यं च विद्वान् केरलनरेशः स्वीये राजप्रासादे तम् आमन्त्रयितुम् इच्छति स्म ।

मुमुक्षुः- ननु प्रशंसनीयम् उभयम्, औदार्यं केरलनरेशस्य, वैदुष्यं च शङ्करस्य। ततः किम् अकथयत् शङ्करः?

गुरुः- शङ्करः अवदत् - भो प्रधान, तत्र गतेन भवता केरलनरेशः एवं

वक्तव्यः यत् भैक्षम् एव वर्णिनः अशनं, कुरंगकृत्तिः एव अंशुकं भवति। एवं स्थिते भवता प्रहितानां वीतेः द्विपस्य, इत्यायाः च (वीतिः=अश्वः, द्विपः=हस्ती, इत्या=शिबिका)आदानेन हि सः भ्रंशिष्यति स्वस्य आश्रमधर्मेभ्यः वर्णधर्मेभ्यश्च।

जिज्ञासुः- अहो वैराग्यम्, साधु साधु । एवम् अभिहितः राजप्रधानः? किम् अन्यत् अभिहितम्?

गुरुः- सः ततः अभ्यधत्त स्वस्य स्वस्य वर्णे आश्रमे च उचितस्य आचरणे प्रजायाः प्रवर्तनम् एव राज्ञोः धर्मः, न तु तासां ततः निवर्तनम् ।

मुमुक्षुः- ननु उचितम् एव एतत् । ईदृशे अल्पीयसि वयसि वर्तमानस्य शङ्करस्य विवेकः अयं वन्दनीयः एव ।

जिज्ञासुः- ततः किम् वृत्तम् गुरुदेव? किम् अरुष्यन् नृपः?

मुमुक्षुः- किम् अशास्यत शङ्करः राज्ञा?

गुरुः- न, न, तुष्टः नृपः स्वयम् एव तं द्रष्टुम् आगच्छत् ।

(गुरुः शिष्यश्च निष्क्रामतः)

***

## दृश्यम् - ५

(शङ्करः शिष्यान् उपदिशति)

शंकरः- ज्ञानार्थकाद् विदेः निष्पन्नम् इदं वेदपदम्। प्रत्यक्षेण अनुमित्या वा अपि अधिगन्तुम् अशक्यः उपायः येन विद्यते सः वेदः ।

शिष्यः- कः तावत् असौ वेदः आचार्यदेव?

शंकरः- वेदाः नाम ग्रन्थविशेषाः यैः वैदिकः सनातनः धर्मः विधीयते ।

शिष्यः-२ वेदाः इत्यत्र प्रयुक्तं बहुवचनं प्रश्नम् उत्पादयति वेदसंख्याविषयकम्, कति सन्ति तावद् वेदाः?

शंकरः- चत्वारः वेदाः - ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः च इति।

शिष्यः- कः अर्थः सिध्यति वेदैः । अर्थात् जीवने अस्माकं कः उपयोगः वेदानाम्?

शंकरः– वेदाः वेदयन्ति उपायम्, सुखस्य प्राप्तेः दुःखस्य हानेः च अस्माकम् इहलोके अमुष्मिन् च अस्मिन् जन्मनि परेषु च । ये अपि इच्छन्ति मुक्तिं शाश्वतीम् जननमरणचक्रात्, तान् अपि वेदयन्ति उपायं मुक्तेः तेषाम्।

(मन्त्रिभिः नृपः प्राप्नोति)

मन्त्री– अपि इयम् एव वसतिः आचार्यस्य शङ्करस्य?

शिष्य–४ ओम् ओम् ।

मन्त्री– आचार्यम् आचष्टुम् आगच्छति केरलनरेशः ।

(आत्मनः महामात्येन सह केरलनरेशः ऐति)

राजशेखरः प्रणमामि आचार्यदेव (साष्टाङ्गं प्रणमति)

शंकरः– आयुष्मान् भव, स्वागतं ते केरलनरेश, स्वागतं ते महामात्य । इदम् आसनम् आसाताम् भवन्तौ । कथयतु केरलनरेश, किं प्रयोजनम् अत्र आगमनस्य।

राजशेखरः– आचार्यचरणस्य वैदुष्यं अध्यापनकौशलकीर्तिः च अस्मान् इह आकृष्टवती अस्ति। श्रुतम् अस्माभिः आचार्यदेव यत् संन्यसिसिषति भवान् ।

शंकरः– सत्यम् अहं संन्यसिसिषामि, परन्तु न जगतः जिहासया । जगत् इदम् अस्ति अद्य अर्थी लोकसंग्राहकानां सेवकानां, विधातुं विश्वस्य शिवम् । अर्थाय अस्मै वयमिह बुभूषामः निमित्तमात्रम् ।

राजशेखरः– बाढम् अभिमतम् अभितो भवतः आचार्यदेव ।

सुमतिः– मानुष्यकम् इदम् अभितः आक्रोशति सकरुणम् उज्जासयितुम् ऐन्द्रजालम् अवैदिकानाम्।

शंकरः– सम्पादयितुम् एव इदं विश्वजनीनं कर्म अहं संन्यसिसिषामि । एषः एव पन्थाः ऐक्यस्य राष्ट्रियस्य सांस्कृतिकस्य च भारतभूमेः प्रतिष्ठापनाय।

राजशेखरः– अस्ति किम् अपि संकल्पितम् एतदर्थं भवता आचार्यदेव?

शंकरः– आम्, उपविश्य पादपद्मयोः भगवतः गोविन्दपादस्य अनुशीलयितुम् इच्छामि उपनिषदः अद्वैतमतं च ।

राजशेखरः:- कुत्र निवसति सम्प्रति भगवन् भगवान् गोविन्दपादाचार्यः?

शंकरः:- क्व अपि नार्मदतटे कस्मिंश्चिद् धिष्ण्ये स समाधिम् आस्थाय विद्यते।

राजशेखरः:- आचार्यदेवः संन्यसितुं कदा केरलम् इमं विरहिष्यति?

शंकरः:- अम्बया अनुज्ञातः एव नरः संन्यसितुम् अर्हति ।

सुमतिः:- अपि अनुज्ञास्यति अम्बा देव?

शंकरः:- (सस्मितम्) बलीयसी केवलम् ईश्वरस्य इच्छा । कः तां प्रत्यर्थयितुम् अर्हति? भो केरलनरेश, अस्ति किमपि भवतः अर्थितम् ?

राजशेखरः:- प्रभो, न अहम् अस्मि सुती, भगवतः अनुग्रहेण अहं सुती स्याम् इति प्रार्थये पादपद्मे भवतः ।

शंकरः:- आत्मनः अनुरूपम् एव आत्मजम् आसादयिष्यसि मतिमन्तम् बलवन्तं च । समीहितं ते सम्पत्स्यते ।

राजशेखरः:- अनुगृहीतः अस्मि । सम्प्रति साधयितुम् इमं जनम् अनुजानातु आचार्यः। अभिवादये ।

(प्रणम्य साष्टाङ्गं राजा अमात्यः च निष्क्रामतः)

***

प्रवेशकः

(गुरुः स्वाभ्याम् शिष्याभ्याम् प्रविशति)

जिज्ञासुः:- किं शङ्करः ततः अनुज्ञाम् अर्थितवान् मातरं संन्यसितुम् ?

मुमुक्षुः:- अथ, किम् अम्बा अपि अनुज्ञातवती पुत्रकम् एककम् आत्मनः संन्यसितुम्?

गुरुः:- अरे तादृशम् एव आपतितम् एकदा येन अम्बया शङ्करः संन्यसितुम् अनुज्ञातव्य एव अभवत् ।

जिज्ञासुः:- तत् कथं?

गुरुः:- आयन्तु, शृणुयाम तावत् शङ्करं , मातरं भाषमाणम् ।

(गुरुः शिष्यश्च बहिः निष्क्रामतः)

## दृश्यम् – ५

(स्वसखिभिः सह अम्बां भाषमाणः दृश्यते)

शंकरः– अम्ब, सखिभिः सहः अहं स्नातुं व्रजामि ।

माता– बाढम् व्रजतु, परम् अचिरेण एयाः। एवमपि कालेन तावत् अतिक्रान्तमेव।

प्रज्ञानः– अम्ब, स्नातौ अचिरेण ऐष्यावः ।

माता– अथ शङ्कर, वारि युवाम् दूरं मा व्राजिष्टाम् ।

शंकरः– अलं चिन्तया, शुभोदर्कमेव सम्पत्स्यते सर्वम् ।

(सर्वे निष्क्रामन्ति, उपेत्य च नदीम्)

शंकरः– प्रज्ञान, पूर्वम् अहम् अवगाहेय, परं त्वं निमज्जेः ।

प्रज्ञानः– युक्तम् एतत् । अनेन वासांसि अपि रक्षितानि स्युः ।

(शङ्करः अवगाढुं नदीं प्रविशति । स्नातः अस्य निष्क्रामतः तस्य पादम् एकं ग्रसते मकरः । स उच्चैः आक्रोशति)

शंकरः– प्रज्ञान, प्रज्ञान, पादे मकरेण ग्रस्तः अस्मि ।

प्रज्ञानः– किं वृत्तम् शङ्कर, मकरेण पादे ग्रस्तः? मकर.....मकर....मातरम् आकारयितुम् अभिद्रवति ।

शंकरः– अम्ब अम्ब, न अहम् अतः परम् इतः निष्क्रान्तुं शक्ष्यामि । किम् अहं कुर्याम् .. हे मातः !

माता– अरे, ननु अयं स्वरः मम शङ्करस्य भाति । स माम् आकारयति .... परन्तु सः स्नातुं नदीं गतः....

प्रज्ञानः– (द्रवन् मातरम् उपेत्य) मातः, शंकरः अवगाढुं नदीम् अवतीर्णवान्। अवगाहमानस्य एव तस्य पादः एकः मकरेण निगृहीतः ।

शंकरः– अम्ब अम्ब, मकरेण निगृहीतः अस्मि ।

माता– हे भगवन्, कच्चित् न मारयेत् मम पुत्रं मकरः ।
(विलपन्ती द्रवन्ती उपैति)
शङ्कर, वत्स शङ्कर निरिहि, निरिहि । (माता तटम् उपैति)

शंकरः- चेत् त्वया संन्यसितुम् अनुमतः स्याम्, मकरनिग्रहात् अस्मात् मुक्तः स्याम् ।

माता- सत्यम् ? तत् कथम् ?

शंकरः- यतः संन्यासः नाम अपरं जन्म एव ननु मातः ।

माता- संन्यस्य अपि शतायुः भवतु शङ्करः ।

प्रज्ञानः- शंकर, शंकर, माता अनुमतवती संन्यसितुम् ।

(चक्षुषी निमील्य शङ्करः संन्यासमन्त्रान् उच्चारयति । मकरः अपि मुक्त्वा पादम् अपैति । शङ्करः निष्क्रामति नद्याः)

अम्ब, अम्ब, एषः अहम् अस्मि प्रतिनिवृत्तः जीवन् एव मकरमुखात्।

माता- सदा ध्रियमाणः भवेः, मम वत्स शङ्कर ।

शंकरः- भद्रम् एव भविष्यति मम मातः, तव आशिषा ।

माता- एहि वत्स गृहं व्रजामः, तव छात्राः अध्येतुम् आगताः सन्ति ।

शंकरः- नाहं गृहं गन्तुम् उत्सहे अधुना । यतः अहम् अस्मि संवृत्तः संन्यासी। तव एतत् ज्ञातम् एव अस्ति अम्ब यत् सम्प्रति मनो मे न रमते छात्राणाम् अध्यापने ।

सावित्री- ब्राह्मणपुत्रः असि तथापि न अध्यापयिष्यसि, किम् अन्यत् तर्हि करिष्यसि?

शंकरः- सम्प्रति इति अहम् उक्तवान् । यावज्जीवम् अध्यापनेन एव वर्तिष्ये, परन्तु गुरुणा आदिष्टः उपदिष्टः संन्यस्य एव ।

सावित्री- शृणु वत्स, पूर्णानद्याम् अवगाहमाने, मकरेण गृहीते त्वयि अम्बा तव उद्विग्ना यत् किञ्चित् प्रलपितवती तत् किं सत्यं भवितुम् अर्हति?

शंकरः- किम् ? तदा अम्बा ननु सत्यम् एव उदीरितवती यत् जीवनहेतोः तव संन्यासः अनुमतः । ननु सत्यम् इदं प्रज्ञान?

प्रज्ञानः- संन्यस्य अपि शतायुः भवतु शङ्करः । ननु त्वम् एव एवम् उक्तवती मातः।

माता- (दीर्घं निश्वस्य) न अभिज्ञातुं शक्नोसि वत्स मातुः हृदयम् । कियन्ति

वर्षाणि देवाधिदेवं महादेवं शङ्करम् आराध्य अहम् अनुभूतवती अस्मि तव मुखस्य दर्शनसौभाग्यम्। तथापि तवा अयं संन्यसितुं निर्बन्धः ।

शंकरः- अम्ब, मम पिता माम् सर्वज्ञम् उत्प्रेक्षते स्म इति ननु त्वया एव बहुशः उच्यते स्म?

माता- सत्यं वत्स, तस्य अयम् एकः एव उत्कटः अभिलाषः आसीत् ।

शंकरः- अथ तव अभिलाषः मातः?

माता- स किं तव पितुः अभिलाषात् अन्यः भवितुम् अर्हति?

शंकरः- ततः अम्ब अनुजानीहि माम् संन्यसितुम् । संन्यस्य एव अहं सर्वज्ञः भवितुं शक्नोमि ।

सावित्री- संन्यासः तु वयसा वृद्धानाम् एव विहितः ।

शंकरः- अथ कश्चन यदि अल्पायुः स्यात् ?

माता- किमर्थं मां दुनोषि वत्स शंकर?

शंकरः- नाहं त्वाम् अम्ब दुनोमि । अहम् इह मृत्युं विजिगीषामि ।

सावित्री- विप्रस्य वेदपाठिनः प्रसूतः त्वं भेत्स्यसि वर्णाश्रममर्यादाम् ?

शंकरः- कथं भिद्यते मर्यादा? संन्यासः अपि आश्रमेषु तुरीयः, विहितः च ब्राह्मणस्य एव, तत् कथम् अहम् अतिचरामि मर्यादाम् ?

सावित्री- गृहस्थाश्रमः हि त्वया अतिक्रम्यते, निरस्य इमं कथं संन्यसितुम् अर्हसि ।

शंकरः- बालयोगी शुक इव अहम् अपि प्रव्रजिष्यामि ।

सावित्री- तर्के, वादे वा कः तव समताम् इयात् ? परं वत्स शङ्कर, आर्यौ इह मातापितरौ कामयेते पुत्रम् एकं तयोः आज्ञाकरम्, यस्य क्रोडे कृतशीर्ष्णोः श्रीकृष्णनाम उच्चारयतोः भवेत् प्राणावसानं, कराभ्यां च अन्त्येष्टिः यथाविधि ।

शंकरः- ननु एतावत् एव अस्ति विप्रतिपत्तिपदम् अम्ब? तर्हि प्रतिजाने अहम् अम्ब, संन्यस्य अपि उपस्थास्यामि त्वाम् इमं लोकं विहाय अमुं वैकुण्ठलोकं प्रतिष्ठमानाम्, विधास्यामि च अन्त्येष्टिं तव ।

सम्बन्धी –२ (सस्मितम्) शङ्कर, अपि यतिना केन अपि कदापि पित्रोः आत्मनः अन्त्येष्टिः कृता श्रुता त्वया?

शंकरः– (दृढेन स्वरेण) कामं न कः अपि कृतवान् भवेत्, शङ्करः खलु करिष्यति।

सम्बन्धी–३– का गतिः तर्हि तव शास्त्रीयायाः मर्यादायाः?

शंकरः– सर्ववन्द्येन अपि यतिना प्रसूः वन्द्या प्रयत्नतः ।

माता– (साश्चर्यम्) वत्स शंकर, किम् इदं सत्यम् ?

सावित्री– जननी जन्मभूमिश्च स्वर्गादपि गरीयसी इति महतां वचः शास्त्रीयम् एव। अतः न भवन्ति शास्त्राणि बाधकानि जननीजनकसेवायाः ।

शंकरः– हितोपदेशात् शास्त्राणि यथार्थानि भवन्ति । मातुः मम च हितं शास्त्रेण उपदिष्टम् अहम् अवश्यं विधास्यामि ।

माता– (गाम्भीर्येण) संन्यसितुं तावत् अहम् अनुज्ञातवती एव अस्मि त्वाम्, परन्तु तव पितुः मनोरथस्य, भगवता भाविनः भाषितस्य किम् ?

शंकरः– (सस्मितम्) कथम् अपि मा चीचिन्तः मातः । अनिर्वर्त्य तव अन्त्येष्टिं न प्रैष्यति एष शंकरः । ततः पूर्वं कालः अपि माम् उपेतुं न उत्सहिष्यते।

माता– ईश्वरस्य अनुग्रहेणम् उक्तं तव ऋतं स्यात् इति एव अहं कामये शंकर ।

शंकरः– (प्रसद्य) तव आशिषा अनुमतिः अपि निर्व्यलीका मया अधिगता संन्यसितुम् ।

माता– (आशिषः प्रयुञ्जाना) सन्तु ईश्वरस्य कामाः । वत्स शंकर, शश्वत् श्रेयसा युज्यस्व ।

शंकरः– (संबन्धिनः उद्दिश्य) माननीयाः ज्यायांसः आर्याः ! विदन्ति एव अत्रभवन्तः यत् मम मनः प्रव्रज्यायाम् एव रममाणः अस्ति । कम् अपि गुरुं मार्गयितुम् अहम् इतः अपैमि दूरम् । अतः अहम् अनाथाम् इमां मम मातरं शरणं भवतः प्रतिपादयामि। रिक्थम् अपि पितुः यत् किञ्चित् तत् अपि भवतः प्रतिपादयामि। सर्वे अपि तत्र भवन्तः, मम मातरं साधु अवेक्षमाणा भवेयुः ।

(मातरं तेषु न्यस्यति)

सम्बन्धी–१– शंकर, प्रवृत्तः असि त्वं शुश्रूषितुं जन्मभूमिं ज्ञानभूमिं श्रुतिमातरं भारतमातरं च, अतः तव जनन्याः शुश्रूषा कर्तव्यम् अस्ति अस्माकं परमम् । अलं चिन्तया । वयम् इह ताम् साधु शुश्रूषिष्यामहे ।

शंकरः– प्रणमामि अम्ब !

(साष्टांगं प्रणमति मातरम् । माता पुत्रं वक्षसा आश्लिष्य शिरसि कराभ्यां स्पृशति, रोदं रोदं च....)

माता– स्वस्ति अस्तु पुत्र ।

(माता रोदिति, शंकरः निष्क्रामति)

(नेपथ्ये)

संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ।। (४/४/२२)

तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाऽशकेन एतमेव विदित्वा मुनिर्भवति । एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति। एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते, किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति । (बृह.उप.४/४/२२)

***

( स्थानम् – गोविन्दनाथ वनम् ( मध्यप्रदेशे सांकलघट्टः )

(पात्राणि : गुरुः, मुमुक्षुः, जिज्ञासुः, शंकरः, चत्वारो मुनयः, गोविन्दपादाचार्यश्च)

प्रवेशकः

(गुरुः शिष्यः च प्रविशतः)

मुमुक्षुः– विहाय जननीं कुत्र गतवान् शङ्करः, गुरुदेव !

गुरुः– जगति लब्धानि लब्धव्यानि च सर्वाणि सुखानि अनित्यानि । अतएव यत् नित्यं शिवं कूटस्थं ध्रुवं च तत्र एव मम आनन्दः । न ईदृशं सुखं कर्मणः फलभूते अस्मिन् भवे लब्धुं शक्यते । ततः किमर्थं कर्म? एवं

नित्यानित्यवस्तुविवेकेन विचार्य विरज्य च ऐहिकपारलौकिकसुखेषु विनिष्क्रान्तः शङ्करः गुरुं मार्गयितुम् ।

मुमुक्षुः- ततः किम् अधिगतः सः गुरुम् ? कः सः गुरुः?

जिज्ञासुः- कुत्र आसीत् स गुरुः?

गुरुः- नार्मदे तीरे, उपसांकलघट्टम् गोविन्दनाथवनम् इति नाम्ना प्रथिते पावने निर्जने च स्थाने शङ्करः अधिगतवान् गुरुं गोविन्दपादाचार्यम् ।

(गुरुः शिष्यश्च निष्क्रामतः)

(नेपथ्ये)

परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ।।

मु. उप.१-२-१२

***

(दृश्यम् - ६)

(एति शंकरः समित्करः, पृच्छति च)

शंकरः- प्रणमामि मुनिवर्य, अपि निर्दिशेत् भवान् गोविन्दपूज्यपादस्य आश्रमम्।

मुनिः- (साश्चर्यं पश्यन् बालशंकरम्)गोविन्दपूज्यपादस्य आश्रमः गन्तव्यः त्व? दक्षिणतः आगतः भासि ।

शंकरः- सत्यम् मुने, गुरुं मार्गयितुं केरलदेशात् अत्र प्राप्तः अस्मि ।

मुनिः- अहो अत्र पर्यन्तम् अद्वितीयः एव क्रामन् सुदूरात् केरलदेशात् प्राप्तः असि? धन्यः त्वम् यस्य तव ईदृशी गुरौ भक्तिः ।

मुनिः-४- पश्य समक्षम्, तत्र या गुहा दृश्यते तत्र एव अस्ति गोविन्दपादाचार्यस्य आश्रमः।

मुनिः-३- प्रायशः स महात्मा प्रवयाः समाधिस्थः भवति । कदापि वयं तं समाधेः प्रबुद्धं न दृष्टवन्तः स्मः ।

मुनिः-२- परन्तु सम्भवति तव आगमनेन समाधेः व्युत्थानं गोविन्दपादाचार्यस्य, अस्माकं च तद्दर्शनेन सत्संगस्य लाभः ।

शंकरः- (गुहाम् उपेत्य तत्र समित् निधाय त्रिः परिक्रामति)

सर्ववेदान्तसिद्धान्तगोचरं तमगोचरम् ।
गोविन्दं परमानन्दं सद्गुरुं प्रणतोऽस्म्यहम् ।।(वि.चू. १)

(गुहाद्वारम् अभितः साष्टांगं प्रणम्य गुहां प्रविशति । समक्षं समाधिस्थं गुरुं स्तौति)

शंकरः- भगवते गरुडध्वजाय विष्णवे यः तल्पायते, यः च शिवस्य करयोः अलंकारायते, यः च सपर्वतां पृथिवीं शिरसि धत्ते, तम् अहम् अशेषरूपम् अपि नररूपं शेषं श्रीगुरुदेवं प्रणमामि । योगस्य शासितारं, व्याकरणस्य च भाषितारं भवन्तं भगवन्तं पतञ्जलिम् अहं प्रणमामि । वेदव्यासात्मजस्य महर्षेः शुकदेवस्य शिष्यात् आचार्यगौडपादात् अधीतवेदान्तशास्त्रः भवान् भासते अखिलगुणगणैः महिम्ना च आत्मनः। अहम् इह भक्त्या परमया भावितः, प्रपन्नः अस्मि शरणं भवतः, अध्येतुं वेदान्तशास्त्रम् ।

(संयन्ति समे मुनयः मिथः संवदन्ति च)

मुनिः-३- साधु अद्भुतं स्तौति अयम् । पश्यतु च, स्तुतिः अस्य प्रतीयते अपि श्रूयमाणा अनेन महात्मना ।

मुनिः-४- सत्यम् प्रतीयते तु, महात्मा अयं प्रबुध्यमान इव भाति समाधेः ।

मुनिः-२- अहो उन्मीलति चक्षुषी आचार्यः ।

सर्वे समेताः- जयतु गोविन्दपादाचार्यः । (३)

मुनिः-३ चक्षताम्, चक्षताम्, मुदितमुखः अयम् आचार्यः अवलोकयति आगन्तुकम्, किम् अपि पृच्छन् इव प्रतीयते ।

गोविन्दपादाचार्यः - कः त्वम् ?

शंकरः- अहम् अस्मि विप्रकुलजातः शिवगुरुतनयः शङ्करः नाम दाक्षिणात्यः। संसारसागरम् उत्तितीर्षुः इह भवन्तं शरणम् आगतः ।

गोविन्दपादाचार्यः(स्मयमानः)-इह एव मृतस्य शरीरं मृद्भावम् आपद्यते । कथं संसारसागरात् उद्धरणम् ?

शंकरः- सत्यम् । शरीरं जायते च म्रियते च । न पुनः आत्मा । यतः न अहं शरीरम्।

स्वामिन्नहं न पृथिवी न जलं न तेजो
न स्पर्शनो न गगनं न च तद्गुणा वा ।
नापीन्द्रियाण्यपि तु विद्धि ततोऽवशिष्टो
यः केवलोऽस्ति परमः स शिवोऽहमस्मि ।। (शं.दि.५/९९)

गोविन्दपादाचार्यः- (नितरां प्रसीदन्) शङ्कर, भगवान् शङ्कर एव साक्षात् जातः त्वम् इति अहं समाधिदृष्ट्या अवैमि ।

(उपेत्य शंकरः प्रणमति)

(नद्याः तटे संन्यासविधिः अनुष्ठीयमानः दृश्यते)

(नेपथ्ये)

अथात आत्मादेश एव । आत्मैवाधस्तात् । आत्मोपरिष्टात् । आत्मा पश्चात् । आत्मा पुरस्तात् । आत्मा दक्षिणतः आत्मोत्तरतः । आत्मैवेदंसर्वमिति । स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिः आत्मक्रीड आत्ममिथुन आत्मानन्दः । स स्वराड् भवति । तस्य सर्वेषु लोकेषु कामचारो भवति । (छा.उप.७/२५/२)

(सम्पन्ने संन्यासविधौ प्रणमति)

गोविन्दपादाचार्यः- एहि वत्स एहि । परमहंसो भविष्यसि । सोम्य, भगवत्पादाभिधानः भव ।

शङ्कराचार्यः- अनुगृहीतः अस्मि भगवन् । अधीहि भगवो ब्रह्मेति ।

गोविन्दभगवत्पादः- वत्स भगवत्पाद, उपनिषदाम् सिद्धान्तस्य प्रतिपादकानि वाक्यानि महावाक्यानि इति उच्यन्ते । चत्वारि तावद् महावाक्यानि चतुर्भ्यः वेदेभ्यः उद्धृतानि सन्ति । तानि अहं त्वाम् उपदेक्ष्यामि । तत्त्वमसि- इदं हि प्रथिततमम् वाक्यम्, आत्मब्रह्मणोः स्वभावसिद्धस्य ऐक्यस्य प्रतिपादकम् । सामवेदीयस्य अस्य उपदेशवाक्यस्य गुरोः मुखात् श्रवणेन अधिकारिणः शिष्यस्य अन्तःकरणे तत्त्वं इति पदाभ्याम्

आत्मजीवब्रह्मणोः असिपदेन च तयोः ऐक्यस्य बोधः सम्भवति । अहं ब्रह्मास्मि इति वाक्येन अहम् अस्मि नित्यशुद्धबुद्धमुक्तसत्य-स्वभावः ब्रह्म इति अखण्डाकारा चित्तवृत्तिः उदेति। यजुर्वेदीयम् इदं अहं ब्रह्मास्मि इति महावाक्यं अनुभव वाक्यम् इति उच्यते। ऋग्वेदीयं प्रज्ञानं ब्रह्म इति महावाक्यं ब्रह्म लक्षयत् लक्षणवाक्यम् इति उच्यते, अथर्ववेदीयं च अयमात्मा ब्रह्म इति महावाक्यं परोक्षतया प्रतिपादितं ब्रह्म प्रत्यगात्मानं प्रत्यक्षतया निर्दिशति । वाक्यम् इदं निर्देशवाक्यम् इति उच्यते। महावाक्यानाम् एषाम् अर्थस्य विस्तृता मीमांसा वेदान्तग्रन्थेषु कृता अस्ति। सर्वाणि अपि एतानि वाक्यानि जीवब्रह्मणोः नित्यसिद्धम् ऐक्यं बोधयन्ति ।

यत् अहम् अहम् इति ब्रवीमि, प्रत्यगात्मनः तद् ब्रह्मरूपम् अनुभवितुम् एव संन्यासाश्रमः आश्रयितव्यो भवति ।

शङ्कराचार्यः- ओम् गुरुदेव !

गोविन्दपादाचार्यः- संन्यासः नाम लोकस्य वित्तस्य पुत्रस्य च एषणायाः त्यागः, अभयदानं च सर्वेभ्यः । अभयदानम् अहिंसा च यतेः मुख्यं व्रतम् । शिखरम् इव अस्ति जीवनं संन्यस्तम् । अनुकरणीयं भवति यतेः उक्तम् आचरितं च, अतएव समाजः तम् आद्रियते ।

शङ्कराचार्यः- ओम् भगवन् ।

गोविन्दपादाचार्यः- ब्रह्मात्मैक्यबुद्धयः यतयः सर्वभूतहिते रताः सन्तः ओंकार एव रममाणाः क्षपयन्ति जीवितम् । भगवत्पाद, त्वम् असि उद्भटः विद्वान्, त्वम् असि उद्बुद्धः यतिः, त्वम् असि शिष्यः विशिष्टः । इतः अपि त्वं भूयाः भारतीयायाः संस्कृतेः उद्धर्ता इति अस्ति मम मंगलकामना।

शंकराचार्यः- धन्यः अस्मि । कृतकृत्यः अस्मि । अनुगृहीतः अस्मि भगवन् । भवतः श्रीमुखात् अध्ययनेन अहम् अनुभवामि अलौकिकं कंचित् आनन्दम्, गुरुदेव । (क्षणं विरम्य) गुरुदेव, अपि अहम् अस्मि अनुज्ञातः कंचित् कालम् अत्र वर्तयितुं गोविन्दनाथवने?

गोविन्दपादाचार्यः- (स्मयमानः) असंशयम्, सर्वजनसाधारणं खलु तपोवनम् नाम। यथाकामम् अत्र निवस । यथेच्छम् अधीयीथाः ।

***

(प्रवेशकः)

(गुरुः शिष्यश्च प्रविशतः)

गुरुः- गुरुकुले प्रथमवर्षकल्पः एव नवागन्तुकः यतिः भगवत्पादः हठयोगसिद्धः बभूव । द्वितीये च वर्षे राजयोगसंसिद्धः अभवत् ।

मुमुक्षुः- गुरुदेव, गोविन्दनाथवने कं कालम् उषितवान् यतिः भगवत्पादः?

गुरुः- त्रीणि वर्षाणि । तृतीये च वर्षे अधीत्य ज्ञानयोगं स महाज्ञानी संवृत्तः। बालः संन्यासी भगवत्पादः यूनि संन्यासिनि भगवत्पादे शङ्कराचार्ये परिणतः, सिद्धयश्च बह्व्यः तेन अधिगताः ।

जिज्ञासुः- गुरुदेव, शङ्कराचार्यर्येण काः सिद्धयः अधिगताः? अपि भवान् बोधयेत् अस्मान् द्वित्राः सिद्धीः?

मुमुक्षुः- अथ गुरो, आचार्येण अधीतमपि विज्ञापयेत् भवान् ।

गुरुः- जिज्ञासो, मुमुक्षो, वयम् इह प्रथमं निरूपयामः, आचार्यस्य एकां सिद्धिम्, अनन्तरं तेन अधीतम् अपि अवलोकयिष्यामः ।

एकदा अभूत् नार्मदः आप्लावः । तदा भगवत्पादेन गुरुः गोविन्दपादः रक्षितः, गुहा च आप्लावाद् रक्षिता ।

मुमुक्षुः- तत् कथम् ?

गुरुः- एकदा तत्र देवः अवर्षत् स्थूणास्थूलैः वर्षधारैः । अनवरतं पञ्चषाणि दिनानि देवे वर्षति नर्मदा आप्लाविता अभूत् । परितः प्रसृतं पयः । सर्वतः अम्भसा आप्लावितम् अभूत् । आचार्यदेवस्य गुहां प्रविविक्षति एव पयसि, तदैव....

(गुरुः शिष्यः च निष्क्रामतः)

## दृश्यम्-७

(सरिदम्भः अवलोकयन्तः मुनयः आलपन्ति)

मुनिः-३- अहो पूरोत्पीडः नर्मदायाः । चतुर्दिशम् जलम् एव अवलोक्यते ।

मुनिः-२- समुद्र इव दृश्यते नर्मदा, न पारं पश्यामः ।

मुनिः-१- भिद्या उत्सिच्यमाना नर्मदा प्रवाहे स्वस्याः तरून् पशून् पदार्थान् अन्यांश्च वाहयन्ती प्रवर्तते । (गुहातः)

मुनिः-१- सदानन्द, चिदानन्द, आनन्दगिरे, क्षिप्रम् एत । धावत धावत । नार्मदं जलं कन्दरां प्रविविक्षत् एव अस्ति ।

मुनिः-३- जलस्य अस्य रोधः कर्तव्यः भविष्यति ।

मुनिः-१- गुहाभ्यन्तरे स्तः गोविन्दपादाचार्यः, भगवत्पादश्च । प्रवाहः पयसः न अवरुद्धः स्यात् चेत् पूरयिष्यति गुहाम्, बाधिष्यते च आचार्यम् ।

(कोलाहलम् आकर्ण्य निष्क्रामति कन्दरातः शङ्कराचार्यः)

शङ्कराचार्यः- किं वृत्तम् महात्मानः? किं कारणम् उद्विग्नाः दृश्यध्वे ।

मुनिः- पश्यतु, अत्र समक्षं पश्यतु । आपञ्चभ्यः दिवसेभ्यः अनवरतं जायमानेन वर्षणेन आप्लावितायाः नर्मदायाः जलं गुहां प्रविविक्षत् एव अस्ति ।

शंकराचार्यः- (स्वं कमण्डलुम् उपगुहाद्वारं निदधाति । जलाकर्षणमन्त्रं जपित्वा, अंकुशमुद्रां प्रदर्श्य नर्मदाष्टकस्य श्लोकान् पठति)

स बिन्दुसिन्धुसुस्खलत्तरङ्गभङ्गरञ्जितं
द्विषत्सु पापजातजातकारि वारिसंयुतम् ।
कृतान्तदूतकालभूतभीतिहारि वर्मदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ।।१।।

महागभीरनीरपूरपापधूतभूतलं
ध्वनत्समस्तपातकारिदारितापदाचलम् ।
जगल्लये महाभये मृकण्डुसूनुहर्म्यदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ।।२।।

गतं तदैव मे भयं त्वदम्बु वीक्षितं यदा
मृकण्डुसूनुशौनकासुरादिसेवि सर्वदा
पुनर्भवाब्धिजन्मजं भवाब्धिदुःखवर्मदे
त्वदीयपादपङ्कजं नमामि देवि नर्मदे ।।४।। नर्मदाष्टकम्

(जलं कमण्डलुं प्रविश्य लीयते )

सर्वे मुनयः- अहो अहो ! अद्भुतम् अद्भुतम् । आश्चर्यम् आश्चर्यम् ।

(सर्वे गुहां प्रविशन्ति । तैः सह शङ्कराचार्यः अपि अस्ति, अतीत्य कंचित् कालम् आचार्यः उन्मिषति)

मुनिः- आचार्यदेव ! अद्य दृष्टम् अस्माभिः महद् आश्चर्यम् । नर्मदाप्लवं जलं भगवत्पादेन समाहृतं स्वकमण्डलौ ।

गोविन्दपादाचार्यः- भगवत्पादः सिद्ध पुरुषः।

शङ्कराचार्यः- सर्वम् इदं भवतः अनुग्रहः एव अस्ति गुरुदेव ।

गोविन्दभगवत्पादः- प्रियदर्शन! अवाप्ता त्वया योगसिद्धिः । वत्स, अतः परम् आरभामहे अध्ययनं ब्रह्मविद्यायाः ।

शङ्कराचार्यः- ओम् गुरुदेव!

गोविन्दपादाचार्यः- माण्डूक्योपनिषदि पठितम् अस्ति -

ओमित्येतदक्षरमिदं सर्वम् ....

शङ्कराचार्यः- ओमित्येतदक्षरमिदं सर्वम् ।

गोविन्दपादाचार्यः- तस्य उपव्याख्यानम् ।

शंकराचार्यः- तस्य उपव्याख्यानम् ।

गोविन्दपादाचार्यः- भूतं भवद्भविष्यदिति । सर्वमोङ्कार एव ।

शंकराचार्यः- भूतं भवद्भविष्यदिति । सर्वमोङ्कार एव ।

गोविन्दपादाचार्यः- यच्चान्यत्त्रिकालातीतम् । सदप्योङ्कार एव ।

शंकराचार्यः- यच्चान्यत्त्रिकालातीतम् । तदप्योङ्कार एव ।

गोविन्दपादाचार्यः- सर्वं ह्येतद्ब्रह्म ।

शंकराचार्यः- सर्वं ह्येतद्ब्रह्म ।

गोविन्दपादाचार्यः– अयमात्मा ब्रह्म ।

शंकराचार्यः– अयमात्मा ब्रह्म ।

गोविन्दपादाचार्यः– सोऽयमात्मा चतुष्पात् ।

शंकराचार्यः– सोऽयमात्मा चतुष्पात् ।

गोविन्दपादाचार्यः– भगवद्गीता नाम द्वितीयं प्रस्थानम् । प्रस्थानत्रय्याम् वेदान्तस्य । तत्र भगवान् ब्रवीति – अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।

शंकराचार्यः– अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।

गोविन्दपादाचार्यः– गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ।

शंकराचार्यः– गतासूनगतासूंश्च नानुशोचन्ति पण्डिता : ।

गोविन्दपादाचार्यः– सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।

शंकराचार्यः– सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।

गोविन्दपादाचार्यः– अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।

शंकराचार्यः– अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ।

गोविन्दपादाचार्यः– अतः परम् ब्रह्मसूत्राणि आलोचयामः । ब्रह्मसूत्राणाम् आद्यानि चत्वारि सूत्राणि इमानि सन्ति – अथातो ब्रह्मजिज्ञासा ।

शंकराचार्यः– अथातो ब्रह्मजिज्ञासा ।

गोविन्दपादाचार्यः– जन्माद्यस्य यतः ।

शंकराचार्यः– जन्माद्यस्य यतः ।

गोविन्दपादाचार्यः– शास्त्रयोनित्वात् ।

शंकराचार्यः– शास्त्रयोनित्वात् ।

गोविन्दपादाचार्यः– तत्तु समन्वयात् ।

शंकराचार्यः– तत्तु समन्वयात् ।

गोविन्दपादाचार्यः– सौम्य भगवत्पाद, सर्वे वेदाः तेषाम् अनुयायीनि सर्वाणि शास्त्राणि च जीवब्रह्मणोः ऐक्यस्य बोधने समनुयन्ति । यत् किञ्चित् अपि अस्ति इति उच्यते तस्य द्वित्वनिषेधे एव शास्त्राणां तात्पर्यम् । सर्वं खल्विदं ब्रह्म इति एव सर्वेषां वेदानां अस्ति प्रतिपाद्यम् । वत्स मतिः एषा

वेदविहितस्य धर्मस्य आचरणेन जायते । स च वैदिकः धर्मः शिथिलायते अधुना । महती ग्लानिः दृश्यते धर्माचरणे सर्वत्र । धर्मस्य अस्य संस्थापनाय एव मया प्रयत्तम् । किन्तु तत् न पर्याप्तम् । प्रेष्ठ, त्वम् असि ज्ञानिनां श्रेष्ठः । त्वम् असि उत्तमः पुरुषः । यथा अभिहितं वेदव्यासेन मुनिराजेन, प्रत्याख्याय अवैदिकानि मतानि स्थापयितुं वैदिकं धर्मम् एव असि त्वम् अवतीर्णः । हे सनातनधर्मोद्धारक, याहि काशीम्। तत्र अनवद्यानि ग्रन्थरत्नानि निर्माय संसारिणाम् उद्धाराय प्रयतेथाः । तत्र काश्याम् आद्यदेवः शिवः त्वाम् अनुग्रहीष्यति।

शंकराचार्यः- यथा आज्ञापयति गुरुदेवः । उपचितः भवतः आशिषा अहम् अवश्यम् उद्धरिष्यामि वैदिकं धर्मम् । प्रणमामि भगवन् । (साष्टाङ्गं प्रणमति)

गोविन्दपादाचार्यः- महान् सन्तोषः । शिवास्ते पन्थानः सन्तु वत्स ।

वैदिकधर्मोद्धार-प्रतिज्ञा नामकोऽवसितः द्वितीयोऽङ्कः ।

****

# तृतीयोऽङ्कः
## ( स्थानम् -काशी नगरी )

(पात्राणि – गुरुः, जिज्ञासुः, मुमुक्षुः, शङ्कराचार्यः, शिष्याः, ब्रह्मचारी ब्राह्मणः (सनन्दन), चाण्डालः, श्वानः चत्वारः, भगवान् विश्वनाथः)

(प्रवेशकः)

(द्वाभ्यां शिष्याभ्यां गुरुः प्रविशति)

मुमुक्षुः- गुरुदेव, भगवान् इति पदेन किम् अभिधीयते?

गुरुः- भगः अस्य अस्ति इति भगवान् । समग्रं ऐश्वर्यं, समग्रः धर्मः, समग्रं यशः, समग्रा श्रीः, समग्रं वैराग्यं, समग्रं च ज्ञानम्, षण्णाम् एतेषां भगानां सामग्री अवतीर्णे अपि यस्मिन् विद्येत सः भगवान् इति उच्यते।

जिज्ञासुः- गुरुदेवः अपि तावद् भगवान् इति उच्यते, तत् कथं?

गुरुः- षण्णां भगानां एको वा द्वौ वा भगौ यस्मिन् भवेतांतमाम् सः अपि भवति भगवान्, परम् अयम् अर्थः गौणः । किञ्च सर्गे, पालने, विनाशे च समर्थः अपि भगवान् इति उच्यते । गुरुः शिष्ये ब्रह्मात्मभावं सृजति, तं संरक्षति, देहात्मभावं च विनाशयति इति अतः गुरुः अपि भवति भगवान् ।

मुमुक्षुः- अस्य इदं तात्पर्यं ननु यद् भगवन्निर्विशेषं वेशं वसानः यः कोऽपि भगवान् न भवति?

गुरुः- देहिनः कस्य अपि नरस्य सर्वज्ञत्वं सर्वशक्तिमत्त्वं न सम्भवति, परन्तु कैश्चित् एव भगवदीयैः गुणैः गुणवान् आत्मवित् गौण्या वृत्त्या भगवत्पदस्य अभिधेयः भवति ।

मुमुक्षुः- गुरुदेव, गुरुणा उपदिष्टः आदिष्टः च भगवत्पादः कुत्र गतः?

गुरुः- अविचारणीया गुरोः आज्ञा । न अस्ति तत्र तर्कस्य अवकाशः न अस्मदीया मतिः अतिशेते गौरवीं मतिम् । अतः शङ्कराचार्यः पालयन् गुरोः आज्ञां गतः काशीं मोक्षपुरीम् ।

(नेपथ्ये)

काशी धन्यतमा विमुक्तिनगरी सालङ्कृता गङ्गया
तत्रेयं मणिकर्णिका सुखकरी मुक्तिर्हि तत्किङ्करी ।
स्वर्लोकस्तुलितः सहैव विबुधैः काश्या समं ब्रह्मणा
काशी क्षोणितले स्थिता गुरुतरा स्वर्गो लघुः खं गतः।।

मणिकर्णिकाष्टकम् ३

गुरुः- प्रविश्य नगरीं काशीं आचार्यः शङ्करः भगवतः विश्वनाथस्य आलयं गतः। तत्र स्तुत्वा सः प्राणमत् ।

(नेपथ्ये)

सानन्दमानन्दवने वसन्तं, आनन्दकन्दं हतपापवृन्दम् ।
वाराणसीनाथमनाथनाथं श्रीविश्वनाथं शरणं प्रपद्ये ।।

(द्वादशज्योतिर्लिङ्ग)

(यं यं वापि देवालयं व्रजति आचार्यदेवः तस्य तस्य देवालयस्य अर्चकः दर्शयति भगवन्तम् आचार्यम्, घंटां वादयन् कपूरेण आरार्तिकं च कुर्वन् । तत्तदेवविषयकाः श्लोकाः बहिः स्थितैः दर्शकैः उच्चार्यन्ते। सर्वे करबद्धं प्रणमन्ति भगवन्तम् ।)

मुमुक्षुः- गुरुदेव, वेदान्तानाम् अद्वैतार्थकत्वं मन्यमानेन अपि आचार्येण देवालयेषु स्थिताः भगवतः श्रीविग्रहाः परमया श्रद्धया भक्त्या च स्तूयन्ते प्रणम्यन्ते च इति अहो ननु एतत् आश्चर्यकरम् ?

जिज्ञासुः- यः हि अद्वैतं भावयति, सः कं पूजयेत् कं स्तुयात्, कं वा प्रणमेत् ?

गुरुः- अद्वैतवेदान्ते न अस्ति मूर्तिपूजायाः विरोधः । तत्त्वतः तु अद्वैतवेदान्तिनः एव भक्ताः भवन्ति । ते एव पूजयन्ति स्तुवन्ति प्रणमन्ति, न अन्ये द्वैतिनः।

मुमुक्षुः- तत् कथं सम्भवेत् गुरुदेव?

गुरुः- श्रृणु, त्वया तव इदं शरीरं पूज्यते न वा? स्नपनेन परिधानेन भोजनेन, पानेन, सर्वैः अपि भोगसाधनैः शरीरम् इदम् एव पूज्यते । चक्षुर्भ्याम्

यद् दृश्यते, श्रोत्राभ्याम् श्रूयते, नासिकया आघ्रायते, रसनया रस्यते, त्वचा स्पृश्यते, पद्भ्यां गम्यते, कराभ्यां क्रियते । सर्वमपि एतद् शरीरस्य अस्य पूजनम् एव अस्ति न वा?

मुमुक्षुः- सत्यम् गुरुदेव, सर्वैः एव उपचारैः शरीरम् एव इदम् उपचर्यते ।

गुरुः- इदानीं विचार्यताम्, शरीरम् इदम् आत्मत्वेन उपचर्यते परत्वेन वा?

मुमुक्षुः- शरीरम् इदम् आत्मानं मत्वा एव उपचरन्ति जनाः ।

गुरुः- परन्तु शरीरम् इदं यथा आत्मनः, तथा परेषाम् अपि अस्ति एव, तत् किं आत्मनः शरीरम् इव परेषां शरीरम् अपि उपचरन्ति जनाः? न उपचरन्ति । प्रत्यक्षम् इदम् अनुभूयते, यथा आत्मनः शरीरे आत्मबुद्धिः भवति, न तथा परशरीरेषु, अत एव आत्मनः शरीरस्य उपचरणे यावती यादृशी श्रद्धा भक्तिः वा भवति न तावती तादृशी वा परेषां शरीराणाम् उपचरणे सम्भवति । आत्मनः शरीरे आत्मबुद्धिः, शरीरात्मनोः अभेदभावः, अनयोः अद्वैतभावना एव आत्मनः शरीरस्य उपचरणे परां श्रद्धां परां भक्तिं जनयति । आत्मनि, आत्मनः शरीरे च अभेदः, अद्वैतम् प्रत्यक्षम् एव अनुभूयते, तथा एव आत्मनि परशरीरेषु च भेदः अपि प्रत्यक्षसिद्धः एव। अतः एव परशरीरेषु आत्मभावः न भवति । तत्र द्वैतम् एव प्रत्यक्षेण अनुभूयते । द्वैतभावस्य अपोहनाय एव तत्त्वमसि इत्यादिभिः उपदेशवाक्यैः उपदिश्यते । अतः एव अहं ब्रवीमि अद्वैतिनः एव भजन्ते, न द्वैतिनः, अद्वैतिनः एव श्रद्दधते, न द्वैतिनः । श्रद्धा भक्तिः च यथा अद्वैते सम्भवतः, न तथा द्वैते ।

जिज्ञासुः- बाढम् गुरुदेव, इदं तावत् अधिगतम् । .... अथ काशीविश्वनाथस्य दर्शनस्य अनन्तरं कुत्र गतवान् अस्माकम् आचार्यः शङ्करार्यः?

गुरुः- शङ्कराचार्यः गतवान् द्रष्टुम् अन्नपूर्णाम् अधिष्ठात्रीं देवीं काश्याः नगर्याः।

(नेपथ्ये)

नित्यानन्दकरी वराभयकरी सौन्दर्यरत्नाकरी
निर्धूताखिलघोरपापनिकरी प्रत्यक्षमाहेश्वरी ।

प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी
भिक्षां देहि कृपावलम्बनकरी मातान्नपूर्णेश्वरी ।।१।।
अन्नपूर्णे सदापूर्णे शङ्करप्राणवल्लभे ।
ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ।।११।।
माता च पार्वती देवी पिता देवो महेश्वरः ।
बान्धवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम् ।।१२।। अन्नपूर्णास्तोत्रम्

गुरुः- भगवत्पादस्य प्रभावेण आकृष्टाः बहवः तं द्रष्टुम् आगताः । उपदिष्टं च तस्य आकर्णयितुं जिज्ञासवः अपि अनेके तत्र प्राप्ताः । शनैः शनैः शिष्यशतयष्टिकः संवृत्तः।

(गुरुः शिष्यश्च निष्क्रामतः)

***

## दृश्यम् - १

(भगवान् शङ्कराचार्यः काश्याम् शिष्यान् अध्यापयति)

शंकराचार्यः- य स एष अणिमा ।

शिष्याः- य स एष अणिमा ।

शंकराचार्यः- ऐतदात्म्यमिदं सर्वं ।

शिष्याः- ऐतदात्म्यमिदं सर्वं ।

शंकराचार्यः- तत् सत्यम् ।

शिष्याः- तत् सत्यम् ।

शंकराचार्यः- स आत्मा तत्त्वमसि श्वेतकेतो ।

शिष्याः- स आत्मा तत्त्वमसि श्वेतकेतो ।

(कश्चन वर्णी उपेत्य गुरुचरणयोः निपतति)

वर्णी- प्रणमामि गुरुदेव ।

शंकराचार्यः- कः त्वम् भोः वत्स ? कुत्र तव गृहम् ? कुत आगतवान् ?

वर्णी- ब्राह्मणः अस्मि भगवन् । यत्र कावेरी नदी वहति, तत्र चौलदेशे अस्ति मम वसतिः ।

शंकराचार्यः- किं कारणम् अत्र प्राप्तः?

वर्णी- द्रष्टुकामः सतः सततम् अहम् अटामि । आटम् आटम् इह आगतः कतिभ्यश्चिद् दिवसेभ्यः पूर्वम् । भीतः अस्मि संसाराब्धौ निमज्जनात् । अनुगृह्य आवारपारीणं मां करोतु अकूपारस्य अस्य । खिन्नः अस्मि दीनः अस्मि नितरां शुचा अहं गुरुदेव। अनालोच्य गुणदोषान् अहं निरीक्ष्यः अस्मि भवता कृपाकटाक्षेण ।

हे भगवन्,

संसारबन्धामयदुःखशान्त्यै स एव नस्त्वं भगवानुपास्यः ।
भिषक्तमं त्वा भिषजां शृणोमीत्युक्तस्य योऽभूदुदितावतारः।।

शं.दि.६/१३

शंकराचार्यः- (काषायं वासः प्रयच्छन्) सनन्दनाभिधानः भव ।

(नेपथ्ये)

न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ।
परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ।।

(कै.उप.१-३)

सनन्दनः- आचार्यदेव, ब्रह्मज्ञानं नाम किम् ?

शंकराचार्यः- निरतिशयः बृहत्पदार्थः ब्रह्म । सः अस्मि अहम् इति ज्ञानम् एव ब्रह्मज्ञानम् । ज्ञानम् इदं शाब्दम्, उपदेशेन लभ्यम् । एतस्माद् विपरीतम् जीवः अहम्, परिच्छिन्नः अहं, गौरः अहं, कृष्णः अहं, स्थूलः अहं, कृशः अहं, अज्ञः अहं, अल्पज्ञः अहं, अमुकनामा अहं इति विशेष्यविशेषणावगाहि ज्ञानम् प्रत्यक्षम् स्वभावसिद्धम् । जीवः ब्रह्म एव न अपरः, परन्तु अज्ञानेन अनवबुद्ध्य आत्मानं जीवं परिच्छिन्नम् अवगच्छति । तत् एतत् अज्ञानम् उपदिष्टेन ब्रह्मज्ञानेन निरस्यते।

सनन्दनः- तर्हि जीवः अहं, मनुष्यः अहम् इत्यादि आकारकं ज्ञानं किं कल्पनामात्रम्, न तु यथार्थम् ?

शंकराचार्यः- सत्यम्, कल्पनामात्रम्, अज्ञानेन जन्या इयं कल्पना । अस्माकं भ्रमः।

सनन्दनः- अस्य अर्थः, यम् अहम् अवैमि जीवम्, सः अहम् अस्मि ब्रह्म?

शंकराचार्यः- ब्रह्म वा इदम् अग्र आसीत् । तत् आत्मानम् एव अवेत् अहं ब्रह्म अस्मि इति, तस्मात् तत्सर्वम् अभवत् ।

शिष्यः- गुरुदेव, उपवृत्तः मध्याह्नः । आह्निकं सम्पादयितुं वयं गंगा प्रतिष्ठेमहि।

शंकराचार्यः- अवश्यं, वयं भगवतीं भागीरथीम् अवलोकयितुं व्रजेम ।

(सर्वे प्रतिष्ठन्ते)

***

(प्रवेशकः)

(द्वाभ्यां शिष्याभ्यां गुरुः प्रविशति)

जिज्ञासुः- गुरुदेव, कः असौ आसीत् वर्णी? किं कारणम् आचार्यः तम् अविचिन्त्य एव सद्यः संन्यासितवान् ?

गुरुः- देवानाम् प्रार्थनाम् अङ्गीकृत्य पशुपतिः शंकर एव वर्षे अस्मिन् भारते संस्थापयितुं सनातनं धर्मं यतिचक्रचूडामणेः शंकराचार्यस्य रूपेण अवतीर्णः। अवतरणात् प्राक् एव शिवः आदिष्टवान् देवान् स्वस्य स्वस्य अंशेन अवतरितुम् ।

मुमुक्षुः- किं तर्हि असौ वर्णी अवतीर्णः कश्चन देवः आसीत् ?

गुरुः- सत्यम्, विष्णुः एव अवतीर्णः असौ, वर्णी ब्राह्मणः, विरक्तः गुरुम् अन्वेष्टुम् अटन् आसीत् ।

मुमुक्षुः- अथ असौ अधिगतवान् गुरुम् ?

गुरुः- सत्यम्, शङ्कराचार्यः आसीत् अमुष्य गुरुः ।

जिज्ञासुः- इदं तावद् युक्तम्, परमाचार्यः अमुं सद्यः एव शिष्यत्वेन अंगीकृतवान्, संन्यासदीक्षया दीक्षितवान् अपि, विस्मापकम् एतत् ननु ।

गुरुः- न, यतः सनन्दनः आसीत् प्रथमः चतुर्षु मुख्येषु आचार्यस्य शिष्येषु। गुरुभक्तौ अपि सः प्रथमः परमः च आसीत् । उपासनया सः भगवन्तं नृसिंहं साक्षात् कृतवान् आसीत् । भगवतः नृसिंहस्य एव अनुग्रहेण सः एकदा कापालिकस्य एकस्य आस्कन्दितात् त्रातुं स्वस्य गुरुम्

अशक्नोत् ।

जिज्ञासुः, मुमुक्षुश्च– अहो, सत्यम् एव तर्हि सनन्दनस्य अतिशयितं महत्त्वम् ।

गुरुः– अथ आयत्याम् अपि आचार्यण प्रतिष्ठापितेषु चतुर्षु पीठेषु अन्यतमस्य पौर्वपुरीपीठस्य आचार्यपदम् अलंकरिष्यमाणः आसीत् अयम् एव ।

मुमुक्षुः– इदानीम् अवगतम् । अभिज्ञाय एव अन्तेवासित्वम् आचार्यः आत्मन्नाकृतवान् सनन्दनम्, संन्यासदीक्षया दीक्षितवान् च ।

गुरुः– सत्यम्, तथा एव युक्तम् ।

मुमुक्षुः– गुरुदेव, अपि अभूत् आचार्यः सम्भावितः समैः अपि संगतैः काशेयैः?

जिज्ञासुः– अपि आचार्येण विन्नः कश्चन विरोद्धा?

गुरुः– आम्, समासादिताः विप्रतिपन्नाः अपि आचार्येण । एकदा शिष्यैः सह काश्याः पद्यासु पद्यमाने आचार्ये इदं वृत्तम् ..... ।

मुमुक्षुः– किं वृत्तम् ?

गुरुः– काश्याः पद्याः नितरां संकुचिताः सन्ति । ईदृश्याम् एव एकस्यां पद्यायाम् शिष्यैः पद्यमानेन आचार्येण शङ्करेण समक्षम् एव आगच्छन् श्वभिः चतुर्भिः एकः चाण्डालः प्रत्युद्गन्तव्यः अभवत् ।

(गुरुः शिष्यः च निष्क्रामतः)

***

## दृश्यम् - २

(शङ्कराचार्यः, शिष्याः, चाण्डालश्च दृश्यन्ते)

सनन्दनः– अपसर, अपसर, कः असि त्वम् अरे, श्वभिः चतुर्भिः मार्गस्य सम्मार्जकः त्वम् असि चाण्डालः । अपसर अस्माकम् पथः ।

चाण्डालः– किम् उक्तवान् ? किम् उक्तवान् ? भवान् मां किम् अपि उक्तवान् ननु?

सनन्दनः– ननु एतावत् एव यत् त्वम् अपेहि पथः ।

चाण्डालः– परन्तु किं कारणम् अहम् अपेयाम् ?

सनन्दनः:- यतः संकुचिता पद्या, त्वाम् अस्पृष्टवद्भिः च अस्माभिः इतः निर्यातुं न शक्यते।

चाण्डालः:- तर्हिं मां स्पृशद्भिः एव भवद्भिः गम्यताम् । न अस्ति अत्र मम कः अपि विरोधः ।

सनन्दनः:- सत्यं तव न अस्ति विरोधः, परम् अस्माकम् अस्ति सः । न वयं स्प्रष्टुम् इच्छामः, त्वां वा, तव शुनः वा ।

चाण्डालः:- आचार्यप्रवर, अपि एतत् अभिमतं भवतः अपि?

शंकराचार्यः:- ओम्, सामान्यः अयं लोकव्यवहारः मांसाशिनः श्वानः, तत्पालकाश्च न स्प्रष्टव्याः । अतः त्वम् अपेहि ।

चाण्डालः:- बाढम्, भवता आदिष्टः अहम् अपैष्यामि, परन्तु अहम् अपेयाम् ततः पूर्वम् भवान् वदेत् यत् भवता आशितेन भवदीयं, मया आशितेन च मदीयं शरीरं निर्मितम् अस्ति...

सनन्दनः:- किं विवक्षसि त्वम् ?

चाण्डालः:- इदम् एव यत् यः अयं द्विजवरः भवान्, यः च अहं चाण्डालः, आवयो उभयोः शरीरम् अन्ननिर्मितम् एव, तत्र किम् अन्तरम् ?

शंकराचार्यः:- अन्तरं तु.....

चाण्डालः:- न अस्ति एव,ननु एतावत् एव? तर्हिं किं कारणम् आदिशसि अन्नमयाद् भवतः शरीरात् अन्नमयं मामकं तत् अपवाहयितुम् ?

शंकराचार्यः:- सत्यम् अन्नमयत्वम् उभयत्र समानम् अतः शरीरम् अपि उभयोः समानम् एव ।

चाण्डालः:- तर्हिं किम् आत्मनः अन्नमये शरीरे प्रकाशमानात् चैतन्यात् मामके अन्नमये शरीरे प्रकाशमानं चैतन्यं वियोजयितुं वदसि अपसर अपसरेति?

शंकराचार्यः:- कथम् एतत् अपि संभवति? न हि चैतन्यस्य चैतन्यस्य च अस्ति कः अपि भेदः येन अन्यतरम् अन्तरयितुम् इतरात् उद्येत ।

चाण्डालः:- इतः अपि साधुतरं बोधयामि, श्रृणु । एकत्र गांगे अम्भसि सूर्यः प्रतिबिम्बितो भवति, अन्यत्र चाण्डालस्य वीथ्याम् द्रवति वारि अपि

स: एव प्रतिबिम्बितः दृश्यते । अनयोः प्रतिबिम्बयोः सम्भवति अन्तरं किम् अपि किम् ? कः अस्ति भेदः स्वर्णघटाकाशे मृद्घटाकाशे च?

शंकराचार्यः- न अस्ति भेदः, सत्यं ब्रवीति भवान् ।

चाण्डालः- ततः हे द्विजश्रेष्ठ, हे आचार्यप्रवर, बोधयतु मां तावत् यत् प्रशमिततरंगे सच्चिदानन्दरूपाब्धौ ब्राह्मणः अयम्, चाण्डालः अयम् इति अन्तरं कुतः?

शंकराचार्यः- (साश्चर्यं, ससंकोचं, सानन्दं च)

ब्रह्मैवाहमिदं जगच्च सकलं चिन्मात्रविस्तारितं
सर्वं चैतदविद्यया त्रिगुणयाऽशेषं मया कल्पितम् ।
इत्थं यस्य दृढा मतिः सुखतरे नित्ये परे निर्मले
चाण्डालोऽस्तु स तु द्विजोऽस्तु गुरुरित्येषा मनीषा मम ।।

(मनीषापंचक १)

हे शरीरिश्रेष्ठ ! ऋतम् अभिहितवान् असि । वेत्सि त्वम् आत्मनः रूपम् । यः कः अपि इदृड्मतिः जगत् इदं आत्मरूपम् एव नित्यं पश्यति, सः ब्राह्मणः वा भवेत् चाण्डालः वा, प्रणम्यः सः मम ।

सनन्दनः- पश्यत पश्यत भोः, अस्माकम् आचार्यः साञ्जलिबन्धं प्रणमति चाण्डालम्।

शंकराचार्यः- भोः, व्रज दूरम् इति नाहं देहं तव दवयितुम् उक्तवान् । दवयितुम् आत्मानम् अपि न उक्तवान् । केवलं तादात्म्यरूपम् अध्यासम् एव अनयोः दवयितुम् उदितवान् । न अयम् अध्यासः त्वयि विद्यते । देहे आत्मभावेन प्रभूते भ्रमभूते नामनी इमे ब्राह्मण-चाण्डालौ। अभ्रान्तः यः शरीरं शरीरम् इति आत्मानं च आत्मा इति जानाति सः अस्ति भवान् आत्मज्ञः। अतः गुरुः अस्माकं भवान् ।

यत्र यत्र स भवेदिह बोधस्तत्तदर्थसमवेक्षणकाले ।
बोधमात्रमवशिष्टमहं तद्यस्य धीरिति गुरुः स नरो मे ।।

(शं. दि. ६-३८)

(साष्टाङ्गं प्रणमति, शिष्याः अपि प्रणमन्ति । मिषतां च समेषाम्, चाण्डालः भगवति काशीविश्वनाथे, श्वानः च चतुर्षु मूर्तेषु वेदेषु परिणताः दृश्यन्ते)

विश्वनाथः- वत्स शंकर, प्रसन्नः अस्मि त्वयि । इच्छामि त्वया जगति अस्मिन् वैदिकस्य धर्मस्य सर्वत्र प्रवर्तनम् । त्वयि वैकल्यम् अल्पम् अपि न अवशिष्येत इति मया इत्थं लीलायितम् । गच्छ, रचय भाष्यम् व्यासरचितेषु ब्रह्मसूत्रेषु । अद्वैतस्य ब्रह्मणः प्रतिपादने एव वेदान्तानां मुख्यं तात्पर्यम् इति मतम् इदं प्रथय । त्वया निष्पादितं यत् किञ्चित् अपि कार्यं मम एव इति विजानीहि ।

शंकराचार्यः- अनुगृहीतः अस्मि प्रभो, प्रणमामि । शिवम् अस्तु ।

(नेपथ्ये)

असारे संसारे निजभजनदूरे जडधिया
भ्रमन्तं मामन्धं परमकृपया पातुमुचितम् ।
मदन्यः को दीनस्तव कृपणरक्षातिनिपुणः
त्वदन्यः को वा मे त्रिजगति शरण्यः पशुपते ।।

(शिवानन्द लहरी १३)

सनन्दनः- अहो आश्चर्यं महद् । ज्ञानं हि भारतभूमौ एवम् आद्रियते ।

शंकराचार्यः- स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ।।
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।।भ. गी. १८-४५/४६

शिष्याः- धन्यम् धन्यम्, धन्या भारतभूमिः, धन्यः वैदिकः धर्मः, धन्यः सनातनः धर्मः ।

(नृत्यम्)

सनातनोऽयं वैदिकधर्मः ईशोपदिष्टः महान् ।
वर्णाश्रमयोरत्र पद्धतिं भूषणं वेत्ति विद्वान् ।।१।।
नात्र कश्चिदुत्तमो नाधमो सर्वे सन्ति समाः ।
स्वं स्वं कर्मानुतिष्ठन्ति सिद्धिं यान्ति समाम् ।।२।।

चित्तविशुद्धिः प्रथमासिद्धिः कर्मणोऽकामस्य फलम् ।
निश्चलचित्तमस्ति द्वितीया स्यादुपासना फलम् ।।३।।
ब्रह्मात्मनोरैक्यबोधेन चरमा सिद्धिः स्यात् ।
मोक्षनाम्न्यानया सिद्ध्या जन्मनः मृत्योश्च मुच्येत ।।४।।
दिव्यभूमिरिवं भारतमातुः गायन्ति दुर्लभां सुरमुनयः ।
द्वारमियं मोक्षस्य वन्द्यन्ते गुरवोऽत्रस्थिरमतयः ।।५।।

***

## दृश्यम् - ३

(व्याकरणस्य धातुपाठम् अभ्यस्यन्तं कंचन वृद्धं शङ्कराचार्यः पश्यति)

वृद्धः- तनु विस्तारे । षणु दाने । क्षणु हिंसायाम् ।

शिष्यः- अहो, किं करोति अयं वृद्धः?

(सर्वे शिष्याः वृद्धाभिमुखं पश्यन्ति, श्रोतुं च तं प्रयतन्ते)

वृद्धः- क्षिणु च । ऋणु गतौ । तृणु अदने ।

शिष्यः-२ वृद्धः तावत् अयं पाणिनिमुनेः धातुपाठम् अभ्यस्यति ।

वृद्धः- घृणु दीप्तौ । वनु याचने ।

शिष्यः-३ अरे, परम् इदानीं परिणते अस्मिन् वयसि धातुपाठस्य अभ्यासेन किं लभ्येत?

वृद्धः- मनु अवबोधने । मनु अवबोधने । डुकृञ् करणे । डुकृञ् करणे ।

शंकराचार्यः- भज गोविन्दं भज गोविन्दं गोविन्दं भज मूढमते ।
सम्प्राप्ते सन्निहिते काले न हि न हि रक्षति डुकृञ् करणे ।।१।।

शिष्यः- अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम् ।
वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशापिण्डम् ।।१५।।

शिष्यः- पुनरपि जननं पुनरपि मरणं पुनरपि जननीजठरे शयनम् ।
इह संसारे बहु दुस्तारे कृपयाऽपारे पाहि मुरारे ।।२१।।

शिष्यः- अर्थमनर्थं भावय नित्यं नास्ति ततः सुखलेशः सत्यम् ।
पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता रीतिः ।।२९।।

शंकराचार्यः- गुरुचरणाम्बुजनिर्भरभक्तः संसारादचिराद्भव मुक्तः ।
सेन्द्रियमानसनियमादेवं द्रक्ष्यसि निजहृदयस्थं देवम् ।।३१।।

भजगोविन्दस्तोत्रम्

***

( स्थानम् काशीतः, बदरीनाथः, बदरीनाथमन्दिरम्, व्यासगुहा )

(पात्राणि – गुरुः, जिज्ञासुः, मुमुक्षुः, शङ्कराचार्यः, शिष्याः, पाशुपतः, अर्चकः, भक्ताः, वेदव्यासः, त्रयः भद्रपुरुषाः)

जिज्ञासुः- गुरुदेव, भारतदेशस्य पृथक् पृथक् प्रदेशेषु देवाः अन्ये च अन्ये च एव पूज्यन्ते । सामान्यम् इदम् अवलोक्यते यत् लोकः स्वस्य इष्टदेवम् अर्चति, अन्यस्य इष्टदेवं तिरस्करोति।

मुमुक्षुः- बहवः तावत् परेषां इष्टदेवं न प्रणमन्ति, न च तस्य नैवेद्यम् अङ्गीकुर्वन्ति।

जिज्ञासुः- न एतत् मनसे रोचते । कामं वयं न अर्चेम सर्वान् अपि देवान्, तेषाम् अनादरेण कः अर्थः?

गुरुः- सर्वे देवाः पूजिताः स्युः अतः एव अस्माभिः स्वीक्रियते पञ्चायतन-पूजापद्धतिः। पद्धतौ अस्याम् मध्ये स्थितम् इष्टदेवम् अभितः अन्ये देवाः स्थाप्यन्ते ।

मुमुक्षुः- परन्तु सर्वे अपि इमे कथं पूजिताः सम्भवन्ति?

गुरुः- स्वस्य इष्टदेवं विस्तरेण, अन्येषां देवानां संक्षिप्य पूजा कर्तव्या भवति ।

जिज्ञासुः- तथापि तत्र स्थापनपूजनयोः देवानां पंचायतनपूजने कः अपि क्रमः स्यात् एव ननु?

गुरुः- भारते मुख्यतया सूर्यः गणेशः दुर्गा विष्णुः च पूज्यन्ते । एषु इष्टोः देवः मध्ये स्थाप्यते, शेषाः सर्वे देवाः ईशानादारभ्य दक्षिणतः क्रमशः स्थाप्यन्ते। यदि मध्ये सूर्यः स्यात् तर्हि शिवः विष्णुः गणेशः दुर्गा च इति, गणेशे मध्यगते विष्णुः शिवः सूर्यः दुर्गा च इति, दुर्गा मध्यगता स्यात् चेत् विष्णुः शिवः गणेशः सूर्यः च इति, शिवः मध्यगतः चेत् विष्णुः सूर्यः गणेशः दुर्गा च इति, विष्णुः मध्यगतः चेत् शिवः

गणेशः सूर्यः दुर्गा च इति क्रमेण देवाः स्थापनीयाः भवन्ति ।

मुमुक्षुः- भद्रतमम् हि इदम् । देवपूजने क्रियमाणे मनसि कीदृशेन भावेन भाव्यम् गुरुदेव?

गुरुः- देहो देवालयः प्रोक्तः स जीवः केवलः शिवः ।
त्यजेदज्ञाननिर्माल्यं सोऽहम्भावेन पूजयेत् ।।
स्कन्दोपनिषदः नवमे अस्मिन् मन्त्रे वर्णितम् अस्ति यत् अस्माकम् इदं शरीरम् देववासः देवालयः, अस्मिन् स्थितः जीवः स्वयं शङ्करः। जीवरूपस्य अस्य शिवस्य उपरि यत् निर्माल्यं तत् एव अज्ञानं, तत् परित्यज्य शिवः अहम् इति भावनया देवपूजा विधेया ।

जिज्ञासुः- अर्थात् अनादेः अज्ञानात् जातं द्वैतभावं ऋतं भावयित्वा पूजा न विधेया, प्रत्युत जीवेश्वरयोः अन्तरम् अनृतं भावयित्वा एव तस्य अपोहनाय देवपूजा विधेया।

गुरुः- कृतम् एवम् उपकरिष्यति आत्मानं शिवं भावयितुम् ।

मुमुक्षुः- अहो, भद्रतमम् हि इदम् । .... ततः किम् आचार्यः बदरीनाथं गतः गुरुदेव?

गुरुः- अङ्गीकृत्य आदिष्टं भगवता विश्वनाथेन आचार्यदेवः काशीतः बदरीनाथाय प्रतस्थे। तत्र मार्गे पाशुपतमतावलम्बी कश्चन वादाय आचार्यदेवम् उपाजगाम।

(गुरुः शिष्यश्च निष्क्रामतः)

***

## दृश्यम् - ४

(शिष्यैः सहागच्छता शङ्कराचार्येण सह मिलति पाशुपतमतावलम्बी)

पाशुपतः- यतिवर, अहम् अस्मि पाशुपतमतावलम्बी । मया भवता सह वादः विधेयः अस्ति।

शंकराचार्यः- यथा इच्छति भवान् । ब्रवीतु तावत्, मुक्तौ किम् अभिमतम् भवतः?

पाशुपतः- महेश्वरेण साम्यस्य उपलब्धिः, अद्वितीये शिवे लयः च, इयम् एव अस्माकं मुक्तिः।

शंकराचार्यः- परन्तु भेदे अङ्गीक्रियमाणे न ईदृशी मुक्तिः सिध्यति ।

पाशुपतः- स्वीक्रियमाणे अपि भेदे भविष्यति शिवध्यानेन मुक्तिः ।

शंकराचार्यः- ध्यानेन मुक्तिः उत्पद्येत चेत् किं कारणं सा न नश्येत् ? ध्यानेन जायमाना मुक्तिः अनित्या भवेत् एव ।

पाशुपतः- मोक्षावस्थायां पशुपतेः शिवस्य गुणाः पशुषु अर्थात् जीवेषु संक्रान्ताः भवन्ति इति पाशुपतं मतम् ।

शंकराचार्यः- न इदम् अपि सम्यक् । जीवः विदेहः जातः अर्थात् अंगहीनः जातः। अंगहीने गुणाः कथं संक्रमेयुः?

पाशुपतः- सूपपाद्यम् इदम् । वायौ पद्मगन्ध इव जीवे अपि पाशुपतानां गुणानां संक्रमणं सम्भवति एव ।

शंकराचार्यः- न इयं युक्तिः विचारसहा, यतः समवायसम्बन्धेन गन्धसम्बद्धं कमलं वायुना अपि संयोगसम्बन्धेन सम्बद्धं भवति येन वायौ गन्धबुद्धिः जायते। प्रकृते न कः अपि सम्बन्धः जीवपशुपत्योः स्वीक्रियते भवता, तत् कथम् असम्बद्धस्य असम्बद्धे संक्रमणं संभवेत् ? अन्यत् च अपरः अपि प्रश्नः अस्माकं संभवति यत् मुक्तेषु माहेश्वराः गुणाः सकलं संक्रामन्ति, विकलं वा?

पाशुपतः- विकलं संक्रमणं स्वीक्रियेत चेत् ?

शंकराचार्यः- विकले संक्रमणे स्वीक्रियमाणे उक्तदोषापत्तिः ।

पाशुपतः- सत्यम्, युक्तम् भवता उक्तम्, परन्तु संक्रमणं यदि सकलम् एव स्वीक्रियेत?

शंकराचार्यः- पक्षे अस्मिन् परमेश्वरे गुणानाम् अभावः प्रसक्तः भवेत्, तस्य सर्वेषाम् गुणानाम् मुक्तजीवे संक्रान्तत्वात् । सर्वेषां गुणानाम् अभावे परमेश्वरः अज्ञतादिसर्वदोषैः दूषितः एव सिद्ध्येत् । अतः कथम् अपि पाशुपतस्य मतस्य युक्तत्वं सिद्धं न भवति। अद्वितीये शिवे लयः एव मुक्तिः इति

स्वीकर्तुम् अभेदः जीवशिवयोः स्वीकर्तव्यः भवति । जीवशिवयोः अद्वैतं स्वीकर्तव्यं भविष्यति ।

पाशुपतः:- सत्यम् प्रतिपादितम् आचार्यदेव, भवता । स्वीकुर्मः वयम् अद्वैततत्त्वम्। प्रणमामः।

(शिष्यैः सह आचायः अग्रतः गच्छति)

***

दृश्यम् - ५

(बदरीनाथम् उपागते)

सनन्दनः:- आचार्यदेव, प्राप्ताः वयं बदरिकाश्रमं धाम । शिवस्य जटाभ्यः निर्गता अलकनन्दा आह्लादिता इव आत्मनि उच्छलन्ती उत्प्लवन्ती दृश्यते।

शंकराचार्यः:- प्रणमामि देवि, भगवति, स्वर्गे अलकनन्दा इति पृथिव्यां भागीरथी इति, पाताललोके च भोगवती इति नामभिः प्रसिद्धे हे देवि, हे सुरेश्वरि, हे भगवति, हे गंगे, नमस्तुभ्यम् -

देवि सुरेश्वरि भगवति गङ्गे त्रिभुवनतारिणि तरलतरङ्गे ।
शङ्करमौलिविहारिणि विमले मम मतिरास्तां तव पदकमले ।।१।।
भागीरथि सुखदायिनि मातस्तव जलमहिमा निगमे ख्यातः ।
नाहं जाने तव महिमानं पाहि कृपामयि मामज्ञानम् ।।२।।
जय जय गङ्गे जय हर गङ्गे जय जय गङ्गे जय हर गङ्गे ।।४।।

गङ्गास्तोत्रम्

शंकराचार्यः:- अहो दर्शनीया छविः इयं भगवतः, हिमालये अस्मिन् अपरिमेये श्वेतकाये नभः स्पृशि ।

शिष्यः-३ एवं हि प्रतीयते यत् विष्णु एव स्वयं भगवान् स्वेन बृहता विश्वरूपेण अत्र विराजते ।

शिष्यः-१ दक्षिणतः वामतश्च नगौ नरनारायणौ स्तः । तत् एव इदं स्थानम् यत्र ऋषी नरनारायणौ उग्रं तपः तप्तवन्तौ ।

शिष्यः-२ स्थानम् इदं पृथिव्याः स्वर्गः एव । मन्ये प्रसार्य बाहू आह्वयति

भक्तान् भगवान् उत्संगे उपवेष्टुम् आत्मनः । भाति इदृशं मनोहारि रूपम् ।

शिष्यः-५ मम हि इदं मतम् यत् बदरिकाश्रमस्य सौन्दर्यस्य दर्शनेन अनालोभितः भवेत् ईदृशः कः अपि नरः पृथिव्यां न स्यात् एव ।

(आलपन्तः अभितः देवालयं गच्छन्ति । गर्भगृहे भगवतः विग्रहम् अदृष्ट्वा सर्वे व्यथिताः भवन्ति)

शंकराचार्यः- अहो, किं कारणम् अत्र देवालयस्य गर्भगृहे भगवतः श्रीविग्रहः एव नास्ति?

अर्चकः- प्रणमामि आचार्य ।

शंकराचार्यः- कः भवान् ?

अर्चकः- अहम् अस्मि अर्चकः अस्मिन् देवालये, भगवतः बदरीविशालस्य । भगवतः बदरीविशालस्य श्रीविग्रहविषये इदम् अस्ति निवेदनीयं यत् प्रतिवेशिभिः राजभिः स्थानम् इदं भूयोभूयः आस्कन्द्यते स्म । आस्कन्दनैः तेषां त्रातुं श्रीविग्रहं भगवतः, वयम् अमज्जयं तम् अस्मिन् नारदकुण्डे।

शिष्यः-३ परन्तु इदानीं निष्कास्य तं नारदकुण्डात् देवालये पुनः यथास्थानं प्रतिष्ठापयितुं शक्यते खलु?

अर्चकः- अवश्यं स्थापयितुं शक्यते, तदर्थम् अन्वेष्टुं भगवतः श्रीविग्रहं नारदकुण्डे प्रयत्नः अपि बहुधा अनुष्ठितः । परन्तु दुःखायामहे यत् न अद्य यावत् वयम् अन्वेष्टुं तं श्रीविग्रहम् प्रभवामः स्मः ।

शंकराचार्यः- भगवद्विग्रहः नारदकुण्डे निहितः, तर्हि अहं स्वयम् एव निमज्ज्य नारदकुण्डम् अन्विष्य ततः तं निष्कासयिष्यामि ।

भद्रपुरुषः-१ आदरणीय यते, नारदकुण्डः अयम् अवलोक्यते बाह्यतः जानुदघ्नः, परम आभ्यन्तरतः अयम् अतिगभीरः ।

भद्रपुरुषः-२ श्रूयते यत् कुण्डः अयम् अधस्तात् अलकनन्दया सम्बद्धः अस्ति ।

अर्चकः- अतः एव अस्ति अवतरणम् अस्मिन् सन्निहितापायम् । अनभिज्ञः च अस्ति अस्य स्थानस्य भवादृशः विद्वान् तेजस्वी महातपस्वी च यतिः ।

भद्रपुरुषः-३ भगवद्भक्तः च अस्ति ।

भद्रपुरुषः-१ तथापि अवतरणं नारदकुण्डे भवतः न शक्यते वक्तुम् अनपायम् ।

अर्चकः- अतः एव न अवतरेत् भवान् नारदकुण्डम् इति वयं प्रार्थयामहे ।

शंकराचार्यः- अवितथम् अस्ति भवद्भिः भाषितम्, परन्तु भगवतः विग्रहः तु नारदकुण्डात् उद्धरणीयः एव । ऋते च तस्मात् पूजा कस्य विधास्यते देवालये?

(निमज्ज्य नारदकुण्डे प्रस्तरमूर्तिम् एकाम् उद्धृत्य ततः आनयति)

सनन्दनः- (सानन्दम्) अहो निष्क्रामति नारदकुण्डात् अस्माकं गुरुः ।

अर्चकः- करयोः च आचार्यस्य अस्ति श्रीविग्रहः अपि भगवतः ।

शंकराचार्यः- पश्यन्तु, मया कराभ्याम् धृतम् एतम् श्रीविग्रहं भगवतः ।

शिष्यः- सत्यम् सत्यम्, पद्मासने आसीनस्य चतुर्भुजस्य भगवतः विष्णोः एव इयं मूर्तिः।

शंकराचार्यः- परन्तु, अपि एतद् दृष्टम् ? इयं मूर्तिः दक्षिणे भागे भग्नः अस्ति । न एतत् वरम् इति वक्तुं शक्यते । भवतु, मूर्तिम् इमां प्रतिनिक्षिप्य पुनः अपि उद्धर्तुम् अन्यां प्रयते ।

(द्वितीयवारं निमग्नवान्, ताम् एव मूर्तिम् अधिगतवान्, तृतीयवारं निमग्नवान्, तदा अपि ताम् एव मूर्तिम् अधिगतवान्)

शंकराचार्यः- अहो महत् आश्चर्यम्, त्रिकृत्वं निमग्नेन अपि मया खण्डितः एव विग्रहः अधिगतः। खण्डितः विग्रहः कथम् इव पूज्येत?

आकाशवाणी- हे शङ्कराचार्य, युगे अस्मिन् भग्ना एव इयं भगवतः मूर्तिः पूजनीया अस्ति ।

(श्रुत्वा एतत् शङ्कराचार्यः स्वयम् एव श्रीविग्रहं तं गर्भगृहे प्रतिष्ठाप्य प्रणीतवान् पूजार्चनविधिम् भगवतः)

शंकराचार्यः- अपि अत्र अस्ति कः अपि अधिगतवेदः पंडितः ?

भद्रपुरुषः-२ आचार्यचरण, हिमेन आच्छादिते अस्मिन् पर्वतीये प्रदेशे शून्यम् एव अस्ति वेदाध्ययनम्।

भद्रपुरुषः-३ अतः एव दुर्निर्वाह्या अस्ति यथाविधि पूजापद्धतिः भगवतः विग्रहस्य, भवता प्रतिष्ठापितस्य।

शंकराचार्यः- भवतु, यदि एवं तर्हि अहं नियोजयामि मम सजातीयं नंबूदरीब्राह्मणम् अस्मिन् भगवतः पूजनार्चनविधौ । एतज्जातीयाः एव ब्राह्मणाः निर्वर्तयन्तः भविष्यन्ति सर्वदा पूजां भगवतः यथाविधि ।

(नेपथ्ये)

नमस्कारोऽष्टांगः सकलदुरितध्वंसनपटुः
कृतं नृत्यं गीतं स्तुतिरपि रमाकान्त त इयम् ।
तव प्रीत्यै भूयादहमपि च दासस्तव विभो
कृतं छिद्रं पूर्णं कुरु कुरु नमस्तेऽस्तु भगवन् ।। भगवन्मानसपूजा ९

शिष्यः-२ गुरुदेव, कां काष्ठाम् अथ व्रजितुं वयं विचारयामः ?

शंकराचार्यः- वयम् एते इदानीं व्यासगुहाम् उपगच्छामः । एते उपेताः स्मः व्यासगुहाम्।

शिष्यः-१ किं कारणं कन्दरा इयं व्यासगुहा इति नाम्ना प्रसिद्धिं गता?

शंकराचार्यः- शिष्याः, व्यासतीर्थः, व्यासगुहा इति नाम्ना ख्यातम् इदं स्थानम् आश्रम आसीत् वेदव्यासस्य । अत्र एव निवसता वेदव्यासेन महाभारतम् निर्मितम् ।

शिष्यः-४ अत्र दक्षिणतः गुहाम् अस्ति देव्याः सरस्वत्याः आलयः, वामतः च गणेशस्य।

शंकराचार्यः- अलकनन्दायाः तटस्थे अस्मिन् आश्रमपदे परम पवित्रे रमणीये निवसता वेदव्यासेन विरचितस्य महाभारतस्य लेखकः गणेश एव आसीत्, सः च अधिगतार्थः एव एकं एकं श्लोकं लिखति स्म इति यस्य साक्षिणी स्वयं सरस्वती आसीत् ।

शिष्यः-३ ननु अयम् एव हेतुः अत्र बहिः व्यासगुहायाः विद्येते देवालयौ गणेशस्य सरस्वत्याः च।

शंकराचार्यः- शिष्याः, वयम् इह एव कंचित् कालं निवत्स्यामः । यथा च आदिष्टम्

अस्माकं गुरुचरणेन भगवता विश्वनाथेन च अद्वैतवेदान्तस्य प्रस्थान-त्रयीभाष्यस्य लेखनकार्यमपि अत्र एव सम्पादयिष्यामि ।

(दृश्यमवसितम्)

(आचार्येण प्रवर्तिता सा एव पूजापद्धतिः सम्प्रति अपि अक्षुण्णतया प्रवर्तते । सम्प्रति अपि रावल इति नाम्ना प्रथितैः दाक्षिणात्यैः नंबूदरी ब्राह्मणैः एव भगवान् बदरीनाथः पूज्यते अर्च्यते च ।)

***

प्रवेशकः

(शिष्याभ्यां गुरुः प्रविशति)

गुरुः- न्युष्य चत्वारि वर्षाणि व्यासगुहायां कृतवान् भगवत्पादः लेखनकार्यम् अद्वैतवेदान्तस्य प्रस्थानत्रयीभाष्यस्य ।

मुमुक्षुः- प्रकम्पने अस्मिन् शिशिरे अपि शिष्यैः सह एव आचार्य आसीत् किमु?

गुरुः- सत्यम्, शिष्याः गुरौ नितरां श्रद्धधानाः आसन् । गुरुम् अनुवर्तितुं ते सदा उद्यताः भवन्ति स्म ।

जिज्ञासुः- चत्वारि वर्षाणि यावत् ईदृशे शिशिरे अध्ययनं गुरोः अनुवर्तनं च इति दुष्करं खलु कर्म । अपि शिष्यैः सर्वम् एतत् सम्पाद्यते स्म?

गुरुः- सत्यम् एव शिष्याः सर्वम् एतत् सम्पादयन्ति स्म । तेषु अपि सनन्दनाभिधानेन शिष्येण तावत् अतिशयितम् एव अनुवर्तने गुरोः ।

मुमुक्षुः- किम् ईदृशं वृत्तं गुरुदेव?

गुरुः- एतम्, एतत् एव ईक्षामहे ।

(गुरुः शिष्यौ च निष्क्रामतः)

***

दृश्यम् - ६

(शिष्यैः सह आस्ते शङ्कराचार्यः)

शंकराचार्यः- अस्माकम् अत्र वसतेः चतुर्भिः वर्षैः दशानाम् मुख्यानाम् उपनिषदां, भगवद्गीतायाः विष्णुसहस्रनामस्तोत्रस्य ब्रह्मसूत्रस्य च भाष्याणां,

सनत्सुजातीयादि स्तोत्राणां प्रकरणग्रन्थानाम् अन्येषां च रचना विहिता। उपदेशसाहस्रीसदृशाः ग्रन्था अपि प्रणीताः ।

शिष्यः-१ जनान् अद्वैतसिद्धान्तं बोधयितुं बहु उपकरिष्यन्ति एते ग्रन्थाः ।

शंकराचार्यः- प्रियाः शिष्याः, धन्याः स्थ यूयम्, यत् ईदृशे कीकसस्य अपि प्रकम्पने शिशिरे ऋतौ गुराः शुश्रूषणपराः तिरस्कृत्य शरीरम् आत्मानम् अनुसन्धध्वे।

शिष्यः-३ कं ग्रन्थम् अद्य अध्यापयिष्यति गुरुदेव?

शंकराचार्यः- वयम् अद्य उपक्रमिष्यामः अध्ययनं भाष्यस्य भगवद्गीतायाः, भासमानं रत्नं महाभारतस्य ग्रन्थस्य ।

ॐ नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम् ।

शिष्यः- ॐ नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम् ।

शंकराचार्यः- अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ।।

शिष्यः- अण्डस्यान्तस्त्विमे लोकाः सप्तद्वीपा च मेदिनी ।।

शंकराचार्यः- द्विविधः हि वेदोक्तः धर्मः प्रवृत्तिलक्षणः निवृत्तिलक्षणश्च । द्विविधः अपि वेदविहितः धर्मः संसारस्य स्थितेः कारणम्, प्राणिनाम् अभ्युदयस्य, निश्श्रेयसस्य अपि अस्ति कारणम् । वैदिके अस्मिन् धर्मे अधर्मेण अभिभूते अवतीर्णः श्रीकृष्णरूपेण आदिकर्ता जगतः नारायणः रक्षितुं ब्राह्मणान् ब्राह्मणत्वं च।....ब्राह्मणत्वस्य हि रक्षणेन रक्षितः स्याद् वैदिको धर्मः तदधीनत्वाद् वर्णाश्रमभेदानाम् ।

शंकराचार्यः- अरे, कथम् अद्य सनन्दनः न दृश्यते? सनन्दन......सनन्दन... (सनन्दनः पारे अलकनन्दायाः विद्यते । शृणोति सः गुरोः आकारणशब्दम्)

सनंदनः- गुरुः माम् आकारयन् इव भाति ।

शंकराचार्यः- सनंदन ........ सनंदन ......

सनंदनः- एषः अहम् आगच्छामि गुरो ।

(स्वगतम्) गुरुं माम् च अन्तरा द्रुतं द्रवति इयम् अलकनन्दा । कथम् इव द्रुतम् उपतिष्ठेय गुरुम् । आम् अस्ति एका युक्तिः । पारं

नयति संसारसागरस्य गुरुचरणभक्तिः, कथं न सा पारं नयेत् अस्या अलकनन्दायाः? अवश्यं नेष्यति पारम् । अहम् इह चरन् एव चरणाभ्याम् उपतिष्ठेय द्रुतं गुरुचरणौ ।

(सनन्दनः अलकनन्दायाम् अवतरति । सत्वरं क्रामन् गुरुम् उपयाति)

(नेपथ्ये)

सन्तारिकाऽनवधिसंसृतिसागरस्य
किं तारयेन्न सरितं गुरुपादभक्तिः ।
इत्यञ्जसा प्रविशतः सलिलं द्युसिन्धुः
पद्मान्युदञ्चयति तस्य पदे पदे स्म ।।

पाथोरुहेषु विनिवेश्य पदं क्रमेण
प्राप्तोपकण्ठममुमप्रतिमानभक्तिम् ।
आनन्दविस्मयनिरन्तनिरन्तरोऽसौ
आश्लिष्य पद्मपदनामपदं व्यतानीत् ।। श.दि. ६-७०-७१

शिष्यः-१ अरे! पश्यन्तु तत्र, अलकनन्दातले क्रामन् पद्भ्याम् ऐति सनन्दनः ।

शिष्यः-३ अधस्तात् अस्य एकैकस्य पदस्य किम् अपि दृश्यत इव ।

शिष्यः-२ अरे! स्रक् एव इयं सरसीरुहाणां सृष्टा अवलोक्यते ।

(उपेत्य सनंदनः प्रणमति)

सनंदनः- अभिवादये अहं गुरुदेव । कः नियोगः अनुष्ठीयताम् आज्ञापयतु ।

शंकराचार्यः- धन्यः असि त्वं, त्वदीयगुरुभक्तेः सनन्दन । अलकनन्दायाम् उदपद्यन्त तव पादतलस्य अधः पद्माः अतः स्याः पद्मपादाभिधानः ।

(अवस्यति दृश्यम्)

***

दृश्यम् - ७

(पुरतः शङ्कराचार्यस्य आसते अध्येतुं शिष्याः)

पद्मपादः- कदा प्रभृति गुरुदेव अध्यापयिष्यति अस्मान् ब्रह्मसूत्रभाष्यम् ?

शंकराचार्यः- अद्यत एव आरभामहे अध्ययनं ब्रह्मसूत्रभाष्यस्य ।

शंकराचार्यः- युष्मदस्मत्प्रत्ययगोचरयोः विषयविषयिणोः ।

शिष्याः- युष्मदस्मत्प्रत्ययगोचरयोः विषयविषयिणोः ।

शंकराचार्यः- तमः प्रकाशवद् विरुद्धस्वभावयोः ।

शिष्याः- तमः प्रकाशवद् विरुद्धस्वभावयोः ।

शंकराचार्यः- इतरेतरभावानुपपत्तौ सिद्धायां ।

शिष्याः- इतरेतरभावानुपपत्तौ सिद्धायां ।

शंकराचार्यः- तद्धर्माणामपि सुतरां ।

शिष्याः- तद्धर्माणामपि सुतरां ।

शंकराचार्यः- इतरेतरभावानुपपत्तिः .......

शिष्याः- इतरेतरभावानुपपत्तिः .........

(आगतः कश्चन ब्राह्मणः पृच्छति)

ब्राह्मणः- कः त्वम् ? किम् अध्यापयसि शिष्यान् ?

पद्मपादः- भगवन्, समस्तासु अपि उपनिषत्सु स्वतन्त्राः एते अस्माकं गुरवः । द्वैतवादं दूरीकर्तुम् एभिः शारीरकसूत्राणां भाष्यं कृतम् ।

ब्राह्मणः- एते छात्राः भवन्तं भाष्यकृतं वदन्ति । किम् एतत् सत्यम् ?

शंकराचार्यः- भगवन्, अहं गोविन्दभगवत्पादानां शिष्यः ।

ब्राह्मणः- एवम् एवम् । यदि त्वं पारमार्षं सूत्रं जानासि, एकं सूत्रम् अर्थतः उच्चारय ।

शंकराचार्यः- सूत्रार्थविद्भ्यो गुरुभ्यो नमः अस्तु । सूत्रज्ञतायाः अहङ्कृतिः मे न अस्ति। तथापि यत् पृच्छति भवान् तद् अहं ब्रवीमि ।

ब्राह्मणः- साधनाध्याये त्वं कतमं सूत्रं मुख्यतमं मन्यसे ?

शंकराचार्यः- प्रथमं सूत्रम्। तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् इति।

ब्राह्मणः- तत् एव विव्रियताम् विव्रियताम् ।

शंकराचार्यः- मृत्युकाले जीवः भूतसूक्ष्मैः संवेष्टितः अन्यत्र गच्छति । अयम् अर्थः छांदोग्योपनिषदि गौतमजैवल्योः प्रश्नोत्तराभ्यां प्रथितः ।

(सप्तदिनानि वादः प्रवर्तते)

(नेपथ्ये)

व्यासो दर्शयति स्म सूत्रकलितन्यायौघरत्नावली-
रर्थालाभवशान्न कैरपि बुधैरेता गृहीताश्चिरम् ।
अर्थाप्त्या सुलभाभिराभिरधुना ते मण्डिताः पण्डिता
व्यासश्चाऽऽप कृतार्थतां यतिपतेरौदार्यमाश्चर्यकृत् ।। शं.दि. ६-१०४

(सप्तदिनेभ्यः परम् )

ब्राह्मणः- हम् । तत्र कथं पञ्चम्यां आहुतौ आपः पुरुषवचसः भवन्ति?

शंकराचार्यः- प्रतिवचनं च - द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निषु श्रद्धासोमवृष्टि अन्नरेतोरूपाः पञ्च आहुतीः दर्शयित्वा 'इति तु पञ्चम्यामाहुतौ आपः पुरुषवचसो भवन्ति' इति ।

ब्राह्मणः- किं तात्पर्यं प्रश्नोत्तरस्य ?

शंकराचार्यः- तस्मात् अद्भिः परिवेष्टितः जीवो रंहति व्रजति इति गम्यते ।

ब्राह्मणः- शोभनम् शोभनम् ।

पद्मपादः- क्षमताम् आचार्यः, सप्तदिवसेभ्यः भवता वादी ब्राह्मणः अयं न अन्यः वेदान्तस्य रहस्यस्य वेदितुः महर्षेः व्यासात् ।

त्वं शङ्करः शङ्कर एव साक्षाद्व्यासस्तु नारायण एव नूनम् ।
तयोर्विवादे सततं प्रसक्ते किं किंकरोऽहं करवाणि सद्यः।।

(शं.दि.७-११)

शंकराचार्यः- हे कृष्णद्वैपायनव्यास, ब्रह्मसूत्राणां मया रचितम् इदम् अद्वैतपरं भाष्यम् यदि भवतः अभिमतम् तर्हि आविर्भूय दर्शयतु आत्मानम् अस्मान् ।

(प्रादुर्भवति व्यासः)

शंकराचार्यः- हे व्यास ! स्वागतं व्याहरामि भवते । अवाप्ताः अखिलाः कामाः मया भवतः दर्शनेन । यं निरूपयन्ति श्रुतयः सः अस्ति भवान् पुराणपुरुषः नारायणः । प्रणमामि भवन्तम् अहम् । ब्रह्मसूत्रभाष्यम् अखिलम् एतत् आलोचतां भवान् इति एव अस्ति अभ्यर्थना मदीया।

वेदव्यासः- (परिवर्त्य पुस्तकपत्राणि) हे विद्वन् ! यथार्थम् अधिगतार्थः असि

ब्रह्मसूत्राणाम् मया रचितानाम् । हे यतिराज ! कः अस्ति समर्थः उद्धर्तुं वेदान्तं ऋते शांकरात् भगवतः अंशात् । आत्मवित्सु ऋषिषु श्रेष्ठ, ब्रह्मणः अधिगतवान् असि आयुष्यम् अष्टवार्षिकम् । द्वितीयम् अष्टवार्षिकम् आयुष्यं लब्धवान् असि ऋषिसेवया। अपरम् इदं षोडशवार्षिकम् आयुष्यं लभ्यतां शिवस्य आज्ञया इति वरं वितरामि अहम् तुभ्यम् । अतः परं सावधानेन त्वया अवैदिकानां गर्वः भज्यताम्, भेदवादिनः च भेदबुद्धेः मोच्यन्ताम् ।

शङ्कराचार्यः- भगवन् ! भवतः आज्ञायाः वशंवदः अहं ब्रह्मसूत्रभाष्यसहायः प्रस्थितः दिग्विजयाय प्रथयिष्यामि सर्वतः अद्वैतसिद्धान्तम् ।

(प्रणमति)

वेदव्यासः- वत्स, पूर्वं तावत् उपेत्य कुमारिलभट्टपादम् प्रयागे, विजयस्व तम् वादे, ततः एव तव दिग्विजयः प्रवर्त्यताम् ।

शंकराचार्यः- प्रणमामि भगवन् ।

वेदव्यासः- कल्याणमस्तु वत्स ।

अष्टौ वयांसि विधिना तव वत्स दत्ता-
न्यन्यानि चाष्ट भवता सुधियाऽर्जितानि ।
भूयोऽपि षोडश भवन्तु भवाज्ञया ते
भूयाच्च भाष्यमिदमारविचन्द्रतारम् ।। (शं.दि. ७-५५)

वेदान्तग्रन्थरचना नामकोऽवसितः तृतीयोऽकः

****

# चतुर्थोऽङ्कः

## ( स्थानम् प्रयागः )

(पात्राणि – गुरुः, जिज्ञासुः, मुमुक्षुः, शंकराचार्यः, शिष्याः, चत्वारः भद्रपुरुषाः, कुमारिलः, प्रभाकरः, अन्ये शिष्याः जनसमुदायश्च)

प्रवेशकः

(शिष्याभ्यां गुरुः प्रविशति)

जिज्ञासुः– जयतु वेदव्यासः, अहोभाग्यम् भगवत्पादाचार्यस्य, लब्धः तेन अवसरः चर्चायै वेदव्यासेन ।

गुरुः– सत्यं वत्स, पर्यवसिता च एषा चर्चा तदीये षोडषवर्षात्मके आयुष्यलाभे, येन सः दिशः विजेतुं प्राभवत् ।

मुमुक्षुः– कुतः उपक्रान्तम् आचार्येण दिग्विजयाय?

गुरुः– वेदव्यासस्य आज्ञया आचार्यदेवः पूर्वम् कुमारिलभट्टपादेन वादं विधातुं प्रयागम् उपायात् ।

जिज्ञासुः– प्रयागे खलु अस्ति गंगायमुनासरस्वतीनां संगमः । अपि एतत् सत्यं, गुरुदेव?

गुरुः– ओम् ओम् सत्यम् एतत् सर्वथा ।

मुमुक्षुः– अपि तत्र संगतः कुमारिलभट्टपादः?

गुरुः– आं, संगतः कुमारिलभट्टपादः आचार्यदेवेन त्रिवेणीसंगमतटे ।

जिज्ञासुः– किं सः एव एकाक्षः कुमारिलः भट्टपादः यः हि राज्ञः सुधन्वनः सभायां जयघोषम् अकारयत् धर्मस्य वैदिकस्य?

गुरुः– सत्यम् तेन एव कुमारिलभट्टपादेन आचार्यदेवः समगच्छत ।

(गुरुशिष्यौ बहिः निष्क्रामतः)

***

दृश्यम् – १

(जनसमुदायः कुर्वन् कोलाहलं सवेगं गच्छति ।
आचार्यदेवः शिष्यैः आगच्छति)

(नेपथ्ये)

मधुवनचारिणि भास्करवाहिनि जाह्नविसङ्गिनि सिन्धुसुते
मधुरिपुभूषिणि माधवतोषिणि गोकुलभीतिविनाशकृते ।
जगदघमोचिनि मानसदायिनि केशवकेलिनिदानगते
जय यमुने जय भीतिनिवारिणी सङ्कटनाशिनि पावय माम् ।।

यमुनाष्टकम् २

शंकराचार्यः- भद्र, किमर्थः अयं कोलाहलः? एतावन्तः जनाः धावन्तः केन कारणेन व्रजन्ति ।

भद्रपुरुषः-१ पारदेश्यः प्रतिभासि । अद्य महामीमांसकः कुमारिलभट्टः गंगायाः रोधसि तुषाग्नौ आत्मानं दहति । तस्य एतस्य महतः विदुषः महाप्रयाणम् अवलोकयितुं लोकः अयं धावन् व्रजति ।

शंकराचार्यः- परन्तु किमर्थम् आचरति आचार्यः एवम् ? मम अपि श्रुतिपथं आगतम् अस्ति कुमारिलभट्टपादस्य वैदुष्यम् । परन्तु अद्य यावत् न तं दृष्टिपथम् आनेतुं मम प्राभवम् ।

भद्रपुरुषः-२ तर्हि प्रभो, मा जीहपः अवसरम् इमं सौवर्णम् । सुकुमारे अस्मिन् कौमारे अपि परिव्राजको भवान् अस्ति रत्नम् अनर्घम् । रत्नद्वयं भवेत् संगतं त्रिवेणीतटे इति भवति सौभाग्यस्य विषयः ।

शंकराचार्यः- परन्तु भद्र, न औत्सुक्यम् अस्मदीयं निराकृतं भवता ।

भद्रपुरुषः-३ मर्षयतु आचार्यः, विषयान्तरम् वृत्तम् । प्रत्याख्यातुं वेदविरुद्धं मतम् आचार्यः कुमारिलः छद्मना नाम्ना अङ्गीकृतवान् शिष्यत्वम् एकस्य वैदिकस्य आचार्यस्य ।

शंकराचार्यः- युक्तम्, ततः किम् ?

भद्रपुरुषः-४ पंडितप्रकांडः सः अवैदिकेषु दर्शनेषु आविष्कृतात्मा गुरुम् एव आत्मनः वादाय आह्वयत ।

शंकराचार्यः- बाढम् बाढम् । ततः?

भद्रपुरुषः-४ ततः वादे गुरुः पराजितः अभवत् ।

शंकराचार्यः- पुनः प्रतिष्ठितं च अभवद् वैदिकं मतम् । ततः?

भद्रपुरुषः-२ ततः दुर्धर्षेण आत्मनः वैदुष्येण अल्पीकृतवान् अवैदिकान् आचार्यः कुमारिलः। फलम् अस्य एव एतत् यद् उत्तरापथे पुनः प्रतिष्ठितः विद्यते सनातनः धर्मः ।

शंकराचार्यः- धन्यः अस्ति आचार्यशिरोमणिः कुमारिलः ।

भद्रपुरुषः- परन्तु अयं वेदसूर्यः सम्प्रति मध्याह्ने एव अस्तं गन्तुकामः अस्ति । आत्मना आचरितस्य गुरुद्रोहस्य प्रायश्चित्तं आचरितुं आचार्यः अद्य आत्मनः शरीरं तुषाग्निना दग्ध्वा त्यक्ष्यन् अस्ति । शिष्यैः बहुधा प्रार्थितः अपि आचार्यः दृढः अस्ति आत्मना संकल्पिते ।

शंकराचार्यः- अन्त्यम् एकं प्रयासम् अहम् कुर्याम् । आगच्छन्तु मया ।

(सर्वे चलन्तः तत्र प्राप्नुवन्ति यत्र कुमारिलः अस्ति । तुषाग्नौ स्थितस्य कुमारिलस्य मुखम् एव दृश्यते । तुषचयस्य अधः अग्निः प्रज्ज्वलितः अस्ति । जगद्गुरोः तेजस्वितया अभिभूताः जनाः तस्मै सादरं मार्गं यच्छन्ति)

कुमारिलः- (शंकराचार्यं दृष्ट्वा)आगच्छतु, आयातु भगवत्पाद शङ्कराचार्य । शिष्याः, आचार्यं सम्पूज्य प्रणमन्तु ।

(सर्वे शिष्याः यथादिष्टम् आचरन्ति)

शंकराचार्यः- (पूजायाः स्वीकृतेः अनन्तरं आत्मनः ग्रन्थं प्रदर्शयन्) भट्टपाद, महर्षिणा वेदव्यासेन रचितानां ब्रह्मसूत्राणां भाष्यम् अहम् कृतवान् अस्मि ।

(भगवान् शङ्कराचार्यः ग्रन्थं ददाति । कुमारिलभट्टपादस्य उभौ हस्तौ तुषचये लीनौ स्तः । अतः तस्य शिष्यः प्रभाकरः स्वहस्ते ग्रन्थम् आदाय परिवर्तयन् पत्राणि भट्टपादं प्रदर्शयति । प्रसीदन् भट्टपादः आत्मनः एकेन चक्षुषा आलोचयति ग्रन्थम्)

सर्वो निबन्धो ह्यमलोऽपि लोके शिष्टेक्षितः सञ्चरणं प्रयाति । अतः अहम् इच्छामि मामकम् भाष्यम् इदम् अधिकृत्य रचयतु भवान् वार्तिकानि ।

कुमारिलः- हे विद्वन्! अस्य ग्रन्थस्य आद्ये एव अध्यासभाष्ये अष्टौ सहस्रम् वार्तिकानि शोभन्ते । यदि अहं व्रताय दीक्षितः न अभविष्यम्, अवश्यमेव

अस्मिन् सुन्दरम् एकं ग्रन्थम् अरचयिष्यम् । भवादृशाः विरक्ताः सनातनधर्मानुयायिनः, आत्मविदः ब्रह्मनिष्ठाः पुरुषाः संसारे अस्मिन् दुर्लभदर्शनाः, विशेषतः सम्प्रति । पूर्वभवेषु अस्मत्कृतानां कर्मणां सुखोदर्कम् एव एतद् यद् भवान् साक्षात्कारयितुं आत्मानम् अत्र प्राप्तः।

असारसंसारपयोब्धिमध्ये निमज्जतां सद्भिरुदारवृत्तैः ।
भवादृशैः सङ्गतिरेव साध्या नान्यस्तदुत्तारविधावुपायः।।

शं.दि.७-८५

दर्शनेन भवतः पूतः अहं इदानीं तनुं त्यक्ष्यामि । देहस्य अस्य धारणेन इदानीं न अस्ति कः अपि अर्थः ।

शंकराचार्यः- अस्ति अर्थः आचार्यप्रवर । अस्ति तत्र किञ्चित् अन्तरम् आवयोः उपाययोः, परन्तु उपेयः तु अस्ति एकः एव-प्रतिष्ठा सनातनस्य धर्मस्य रक्षणं च प्रजायाः भारतीयायाः अमायायाः धर्मविद्वेषरूपात् विषात् ।

कुमारिलः- प्रभो, साक्षात् शिवः भवान् । असंशयम् आवयोः उपेयम् समानम्। यदि भवान् अतः पूर्वम् एव दृष्टः अभविष्यत्, कृतार्थेन मया अभाविष्यत, न च अपोहितुम् आत्मना दुश्चरितम् इदं आचरितुम् अवसरः अयं प्राप्तः अभविष्यत् ।

शंकराचार्यः- ईदृशं किम् दुश्चरितं आचरितं भवता ?

कुमारिलः- प्रत्याख्यातुं अवैदिकं मतं तेषां गुरोः तेषां शास्त्राणि अहम् अधीतवान् । एकस्य अपि अक्षरस्य प्रदाता गुरुः इति उच्यते । अखिलस्य शास्त्रस्य उपदेष्टा गुरुः भवेत् इति अत्र वक्तव्यम् एव किम् अस्ति? इदं जानन् अपि वादे तं गुरुम्, अहं निर्जितवान् । एवं गुरोः द्रोहरूपं प्रथमं पापम् अहम् आचरितवान् । जैमिनिमुनेः च शास्त्रे कृताभिनिवेशेन मया परमेश्वरः एव निराकृतः । इदम् अस्ति द्वितीयं पापम् । अनयोः उभयोः पापयोः वेदविहितम् प्रायश्चित्तम् अहम् अधुना आचरामि।

शंकराचार्यः- भवन्तम् अहम् श्रुतीनां प्रामाण्यस्य प्रतिपादनाय कर्ममार्गस्य च स्थापनाय अवतीर्णं स्वामिनं कार्तिकमेव मन्ये । नास्ति भवतः चरित्रे

पापलेशस्य अपि संभावना । सत्यव्रतान् सज्जनान् शिक्षयितुम् एव अनुतिष्ठति भवान्, इदम् प्रायश्चित्तम् । अम्भसा अभ्युक्ष्य अग्निम् अहं शमयामि ।

कुमारिलः- हे पूज्य ! शुद्धेन अपि मया लोकविरुद्धम् इदम् आचरितम्, यत् न अस्ति मम आत्मनः सदृशम् । अतः न अहं त्यक्ष्यामि मया संकल्पितं व्रतम् । हे उपदेशकशिरोमणे, तारकमन्त्रस्य उपदेशेन मां कृतार्थं विदधातु भवान् । विदुषाम् श्रेष्ठेन च मम शिष्येण मण्डनमिश्रेण विदधातु वादं प्रकाशयितुं वेदान्तमार्गम् । माहिष्मतीनगरीनिवासिनः कर्मठस्य अस्य महतः गृहस्थस्य विजयेन मनोरथः अवश्यम् एव भवतः सिद्धः भविष्यति । मा चीचिरत् सम्प्रति, तम् उपव्रजेत् भवान्। मण्डनमिश्रस्य पत्नी उभयभारती अस्ति साक्षात् एव अवतीर्णा सरस्वती। वादे तां मध्यस्थाम् उपकल्पयेत्।

हे निर्व्याजकरुणामूर्ते यतिवर, निरीक्षमाणः भवतः रूपम् अहम् एष जहामि प्राणान् आत्मनः ।

(शङ्कराचार्यः कर्णे तारकमन्त्रम् उपदिशति । उपदेशश्रवणस्य अनन्तरं कुमारिलभट्टः विरमयति वाचम् । प्रभाकरः अन्ये शिष्याः च कुमारिल-भट्टपादस्य, विलपन्ति)

***

## स्थानम् माहिष्मती, मण्डनमिश्रस्य गृहम्

(पात्राणि-गुरुः, जिज्ञासुः, मुमुक्षुः, तिस्रः नीरानेत्र्यः, महर्षिः जैमिनिः, महर्षिः वेदव्यासः, शङ्कराचार्यः, तस्य शिष्याः, मंडनमिश्रः, तच्छिष्याः, उभयभारती च)

### प्रवेशकः

(गुरुः शिष्यः च प्रविशतः)

मुमुक्षुः- गुरुदेव, कुमारिलः भट्टपादः वैदिकः पंडितः आसीत्, आचार्यदेवः अपि आसीत् वैदिकः यतिः । अतः न अनयोः मध्ये ननु विरोधेन स्थातव्यम्?

जिज्ञासुः- यत्र च न अस्ति विरोधः, कः अर्थः वादेन?

गुरुः- निरीक्षताम् तावत्, कः वर्णः मम अस्य वाससः?

जिज्ञासुः मुमुक्षुश्च – कुंकुमवर्णम् इदं वासः ।

गुरुः- अस्य हेतोः, अपि युवाम् अनुष्ठितवन्तौ यज्ञदानादीन् ? जपः, तपः, प्राणायामः, देवपूजनम् एतत् सर्वम्, अपि अनुष्ठितम्?

मुमुक्षुः- वाससः वर्णं वेदितुम् एभिः सर्वैः कः अर्थः ?

गुरुः- तर्हि वर्णं वेदितुं किम् आवश्यकम् भवति ?

जिज्ञासुः मुमुक्षुश्च- चक्षुषी ।

गुरुः- श्रोत्राभ्यां, नासिकया रसनया वा वर्णः वेदितुं न शक्यते किम्?

मुमुक्षुः- वर्णस्य वेदनं ननु चक्षुर्भ्याम् एव भवति ।

गुरुः- सत्यम्, वर्णं वेदितुं चक्षुषी इमे प्रमाणं भवतः । प्रमाणं नाम वेदितुं अनन्यः उपायः ।

मुमुक्षुः- तर्हि अस्ति अत्र कुमारिलभट्टपादस्य काचित् विप्रतिपत्तिः?

गुरुः- कुमारिलभट्टपादादयः वैदिकाः पंडिताः यज्ञादिभिः स्वर्गप्राप्तये प्रयतन्ते। स्वर्गः एषाम् आनन्दः ।

जिज्ञासुः- कः तावत् अत्र दोषः ?

गुरुः- स्वर्गस्य अनित्यत्वं दोषः, क्षयिष्णुत्वं दोषः ।

मुमुक्षुः- अनित्यः स्वर्गः? क्षयिष्णुः च अपि सः?

गुरुः- अथ किम् । किम् अन्यत् स भवितुम् अर्हति । सः अनित्यः एव, क्षयिष्णः एव स्यात् । अतः एव भगवता उक्तम् – क्षीणे पुण्ये मत्यलांकं विशन्ति ।

जिज्ञासुः- स्वर्गं गत्वा पुनः आगन्तव्यं भवति ततः, किम् ?

गुरुः- सत्यम् – स्वर्गं गत्वा पुनः आगन्तव्यं भवति । निवर्त्य च ततः पुनः अनुष्ठाय यज्ञादीन् स्वर्गगमनं, पुनः ततः निवर्त्य यज्ञादेः अनुष्ठानम् । अतः एव न स्वर्गः आनन्दमयः। आनन्दःस्वरूपम् आत्मनः। सः च अहम्, अतः सः न प्राप्यः ।

मुमुक्षुः- तर्हि किं कार्यम् ?

गुरुः- केवलम् ज्ञातव्यम् ।

जिज्ञासुः- कथं ज्ञातव्यम् ?

गुरुः- आत्मानं ज्ञातुं यत् साधनं, यत् प्रमाणं, तेन ।

मुमुक्षुः- किं प्रमाणम् ?

गुरुः- धर्माधर्मौ, पापपुण्ये, आत्मानात्मानौ, अतीन्द्रियाः विषयाः एते । न इन्द्रियैः वेदितुं शक्यन्ते । विषयाणाम् एतेषां ज्ञानाय सन्ति वेदाः प्रमाणम्। अतः एव वेदान्तः इति नाम्ना प्रथितैः गुरुणा उपदिष्टैः उपनिषद्भिः आत्मा विज्ञेयः।

जिज्ञासुः- गुरुदेव, उपनिषद्भिः आत्मा ज्ञायेत अपि, तस्य विज्ञानेन कथम् आनन्दः अनुभूयेत?

गुरुः- रूपं ज्ञातुं चक्षुषः प्रामाण्यम् इव आत्मानं वेदितुं उपनिषदः भवन्ति प्रमाणम्। स च आत्मा आनन्दरूपः इति उपनिषत् एव बोधयति । एवं बुद्धस्य दृढेन बोधेन आनन्दस्वरूपः एव आत्मा अनुभूयते ।

जिज्ञासुः- अस्यार्थः ननु.....वैदिकाः कर्मकांडिनः यज्ञादिना आनन्दम् अभिलषन्ति।

मुमुक्षुः- परन्तु आनन्दः खलु अस्माकम् आत्मा एव । अतः एव सः न प्राप्तव्यः प्रत्युत ज्ञातव्यः ।

गुरुः- यथार्थम् अवगतवान् । अयम् एव विप्रतिपत्तेः विषयः वैदिकानाम् यतीनां पण्डितानां च । विप्रतिपत्तेः विषये अस्मिन् एव अनयोः वादः प्रवर्तते।

मुमुक्षुः- कुमारिलभट्टपादः आदिष्टवान् आचार्यदेवं, गत्वा नगरीं माहिष्मतीं मम शिष्येण मण्डनमिश्रेण करोतु वादम् इति । किं ततः आचार्यदेवः माहिष्मतीं गतवान्? अपि मंडनमिश्रेण सः वादं कृतवान् ?

जिज्ञासुः- किं निर्णीतम् आसीत् तस्य वादस्य?

गुरुः- आचार्यदेवः माहिष्मतीं गतः, वादः अपि मंडनमिश्रेण तेन विहितः ।

(गुरुः शिष्यश्च निष्क्रामतः)

## दृश्यम् - २

(तिस्रः नीरनेत्र्यः पयः पूरितान् कलशान् आनयन्त्यः दृश्यन्ते)

नीरनेत्री-१ अद्य मण्डनमिश्रगृहे श्राद्धं निष्पाद्यमानम् अस्ति, येन तत्र बहवः जनाः भोक्तुम् आगमिष्यन्ति। अतः जलम् अपि अद्य अधिकं वोढव्यम् भविष्यति।

नीरनेत्री-२ सखि, वयं स्मः सौभाग्यवत्यः । यतः वयं स्मः सेविकाः मीमांसकशिरोमणेः विद्वद्वरस्य मंडनमिश्रस्य । मंडनमिश्रः अस्ति शिष्यः कुमारिलभट्टस्य वेदरक्षकस्य परमास्तिकस्य । गृहम् अपि मंडनमिश्रस्य अस्ति अस्याम् माहिष्मतीनगर्याम्, या हि आत्मनः ऐश्वर्येण वैभवेन च विख्याता अस्ति । नगर्याम् अपि माहिष्मत्याम् मंडनमिश्रस्य गृहम् नर्मदायाः तटे विद्यते, या लोकमाता इति प्रथिता दर्शनमात्रेण पवित्रयति पुरुषम्, नाशयति च कलिमलम् ।

नीरनेत्री-३ अन्यत् च मंडनमिश्रस्य गृहे, वादः पुनः पुनः प्रवर्तते येन अखिलदेशीयान् विदुषः श्रोतुं क्षणः अस्माभिः लभ्यते, अनेन व्याजेन साधवः अपि दृष्टाः भवन्ति ।

नीरनेत्री-२ सख्यः, पश्यत पश्यत, तस्यां दिशि पश्यत, कश्चन युवा तेजस्वी यतिः शिष्यैः आत्मनः आकाशात् अवतरन् इव भाति ।

नीरनेत्री-१ मन्ये पराजेतुं कार्तवीर्यं स्वयं विष्णुः एव अवतीर्णः परशुरामरूपेण आयाति। प्रगल्भस्य ईदृशस्य यतेः दर्शनेन एव हृदि आत्मानम् धन्याम् अनुभवामि।

नीरनेत्री-३ सखि, यतिः असौ इतः एव आयन् प्रतीयते ।

(शिष्यैः सह उपेत्य शङ्कराचार्यः नीरनेत्रीः पृच्छति)

शंकराचार्यः- अपि निर्देक्ष्यति भवती मण्डनमिश्रस्य गृहम् मह्यम् ?

नीरनेत्री-२ मंडनमिश्रस्य गृहम्? ननु सुलक्ष्यम् एतत् ।

नीरनेत्री-३ यस्य गृहस्य द्वारि लम्बमानेषु पञ्जरेषु स्थिताः कीरांगनाः मिथः विवदमानाः दृष्टाः भवेयुः, तदेव मंडनमिश्रस्य गृहम् ।

शंकराचार्यः- कीरांगनाः विवदन्ते? कथं ताः विवदन्ते?

नीरनेत्री-१ स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरं गिरन्ति ।
द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तन्मण्डनपण्डितौकः ।।

नीरनेत्री-२ फलप्रदं कर्म फलप्रदोऽजः कीराङ्गना यत्र गिरं गिरन्ति ।
द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तन्मण्डनपण्डितौकः ।।

नीरनेत्री-३ जगद्ध्रुवं स्याज्जगदध्रुवं स्यात्कीराङ्गना यत्र गिरं गिरन्ति ।
द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तन्मण्डनपण्डितौकः ।।

(सर्वे निष्क्रामन्ति )

***

दृश्य-३

(स्वगृहे मण्डनमिश्रः पूजयन् दृश्यते)

मंडनमिश्रः- (अवसिते तर्पणविधौ) अनेन तर्पणेन श्रीपरमेश्वरः प्रीयताम् न मम । (पत्नीं सम्बोधयन्) देवि, सम्पन्नः तर्पणविधिः । अतः परम् अभ्यागतेभ्यः भिक्षां दातुं बहिः गच्छेव ।

उभयभारती- (जलपूर्णं कलशम् आदाय आगच्छन्ती) ओम् स्वामिन् ।

(शङ्कराचार्यः मंडनमिश्रस्य गृहम् उपैति । पंजरस्थाः कीरांगनाः विवदमानाः श्रूयन्ते । शङ्कराचार्यः गृहं प्रविशति । तदा एव मंडनमिश्रः तस्य पत्नी च निष्क्रामतः गृहात्)

शंकराचार्यः- अपि एतत् एव पंडितस्य मंडनमिश्रस्य गृहम् ?

मंडनमिश्रः- स्वागतम् । अभ्यागतः स्वयं विष्णुः ।

(उभयभारती कलशस्थेन पादावनेजनजलेन प्रक्षालयति चरणौ आचार्यदेवस्य)

उभयभारता- यतिश्रेष्ठ, आगच्छतु, अभिनन्दनं भवतः । मम गृहे भैक्षम् गृह्णातु ।

शंकराचार्यः- न अहं अन्नम् भिक्षितुं आगतः अस्मि ।

मंडनमिश्रः उभयभारती च – तर्हि ?

शंकराचार्यः- अहं हि वादं भिक्षितुं आगतवान् अस्मि । वेदान्तमतं प्रथयितुम् अहम् इच्छामि । एतत् अतिरिच्य न अस्ति किम् अपि मम इष्टम् ।

मंडनमिश्रः- वादं भिक्षते भवान् ? नितान्तं हृष्टः अस्मि ।

शंकराचार्यः- सम्मन्यतां वा भवान् वेदान्तमतं, विवदतां वा मया, अन्यथा पराजितः अस्मि इति ब्रूताम् ।

मंडनमिश्रः- (सगर्वम्)सहस्त्रमुखे शेषेऽपि समक्षं विद्यमाने न अयं मण्डनमिश्रः पराजितः अस्मि इति वादी । तर्हि ईदृशेन मया श्रुत्या प्रतिपादितम् कर्मकांडस्य सिद्धान्तं विहाय पराजितः अस्मि इति ब्रुवाणेन, वैराग्यम् आश्रितवतां यतीनां कपोलकल्पितः सिद्धान्तः कथं स्वीकरिष्यते? कीदृशं भाषते भवान्?

उभयभारती- पूर्वं तावत् भवान् भोज्यभैक्षम् आददातु, अनन्तरं वादभैक्षम् अपि दास्यते। (सर्वे गृहं प्रविशन्ति । आभ्यन्तरे व्यासः मुनिः जैमिनिः च अपि मुनिः आसाते । सर्वे अश्नन्ति । अनन्तरं सर्वे प्रतिष्ठन्ते । अनन्तरे दिवसे वादसभा प्रायोजिता भवति । मंडनमिश्रः श्रीशङ्कराचार्याय स्वागतं व्याहरति । यथास्थानं सर्वान् उपवेशयति, स्वयं अपि उपविशति)

मंडनमिश्रः- भवद्भिः अनुमतं चेद् वादः प्रारभ्येत? ... परन्तु आवयोः अस्मिन् वादे माध्यस्थ्यं कः निर्वक्ष्यति?

शंकराचार्यः- भवतः धर्मपत्नी उभयभारती आचरिष्यति माध्यस्थ्यम् । (मंडनमिश्रस्य पार्श्वतः स्थितां उभयभारतीम् उद्दिश्य) मातः, भवत्याः वैदुष्ये बहु श्रुतवान् अस्मि । महापंडिता अस्ति भवती । अतः वादे अस्मिन् मध्यस्था भवती भवतु ।

उभयभारती- यतिश्रेष्ठ, वादः अयं भवतः उपक्रान्तः एव अस्ति । वादे अस्मिन् मम पतिः एव अस्ति एकः पक्षः । मयि मध्यस्थायाम् निर्णये पक्षपातः सम्भवेत् एव । कथम् अहं अतः मध्यस्था स्याम् ?

शंकराचार्यः- सत्यम् अभिहितवती भवती । परन्तु आवयोः वादे भवत्या निर्णीतः जयः पराजयः वा सर्वथा पक्षपातेन रहितः एव भविष्यति, अतः न कः अपि दूषयिष्यति भवतीम् ।

उभयभारती– यतिवर, आददे आदेशं भवतः, परन्तु दैनन्दिनेषु गृहकार्येषु नित्यनैमित्तिकेषु च कर्मसु च निरन्तरं व्यापृतायाः मम अत्र आदिनं स्थानं न सम्भविष्यति ।

शंकराचार्यः– मातः, अत्र विशये भवत्या प्रकल्पितः यः कः अपि उपायः आवयोः अंगीकार्यः अस्ति ।

उभयभारती– तर्हि शृणुताम् । अनुदिनम् अहम् उभयोः अपि वादिनोः कण्ठयोः एकां एकां स्रजम् अर्पयिष्यामि । यस्मिन् दिने भवतोः अन्यतरस्य यस्य अपि कण्ठस्था माला पूर्वं म्लाना शोक्ष्यति तेन आत्मनः पराजयः स्वीकर्तव्यः भविष्यति, यस्य च गले धृतायाः मालायाः पुष्पाणि विकसितानि स्थास्यन्ति, तस्य विजयः मतः भविष्यति । अपि इयं निर्णयपद्धतिः भवतोः मता?

शंकराचार्यः– मातः, प्रशंसनीया भवत्याः विवेकबुद्धिः। परन्तु पुष्पमालया कथं निर्णेतुं शक्यते, विजयः पराजयो वा?

उभयभारती– महात्मन्, धर्मविषयं विचारयन्तः ये हि लेशमात्रम् अपि न उद्विजन्ते, न च क्रुध्यन्ति, ते एव आत्मनः पक्षसिद्धये न्याय्यां युक्तिं तर्कं वा प्रस्तोतुं शक्नुवन्ति । परन्तु आविश्य विवदमानाः निर्बलतर्कयुक्तिमन्तः अन्याय्यं भाषितुं प्रवर्तन्ते । उभयोः अपि भवतोः विदुषोः वादे प्रवृत्तयोः यः एव पूर्वम् आविष्टः क्रुद्धः वा भविष्यति तस्य शरीरे तापः वर्धिष्यते येन तस्य कण्ठस्था माला अपि शोषं यास्यति । एवं तेन आत्मनः पराजयः आत्मना एव अभिमतः भविष्यति । अस्मात् एव हेतोः निर्णयपद्धतिः इयं मम रोचिता ।

शंकराचार्यः– बाढम् मातः, भवत्या प्रतिपादितं प्रतिपद्यावहे ।

उभयभारती– (उभौ स्रग्धरौ विधाय) तर्हि इदानीं उभौ अपि विद्वत्शिरोमणी महापुरुषौ प्रतिज्ञाय स्वपक्षं वादं प्रारभेताम् ।

शंकराचार्यः– (उच्चैः स्वरेण) अद्वितीयं ब्रह्म एकम् एव परमार्थसत्यम् । अनादिसिद्धेन अज्ञानेन तद् आवृतमस्ति । अतः यथा शुक्तिः रजतरूपा प्रतीयते तथा ब्रह्म समस्तप्रपंचरूपेण प्रतीयते । ब्रह्मज्ञानेन प्रपंचः तस्य कारणभूतम्

अज्ञानं च नश्यति । तदा या स्वरूपे स्थितिः सा मुक्तिः इति अस्माकं मतम् । मते च अस्मिन् वेदशिरोभूताः उपनिषदः प्रमाणम् । प्रतिज्ञा इयं मम मंडनमिश्र । वादे अस्मिन् अद्वैतमतस्य विजयः अवश्यंभावी, परन्तु कथंचित् अपि यदि अहं पराजितः स्याम्, तर्हि परिहाय पारिव्राज्यम् इदम् काषायपरिधानम्, सितवासाः स्याम् । वादे अस्मिन् जयस्य पराजयस्य वा निर्णयं करिष्यति भवतः धर्मपत्नी उभयभारती ।

उभयभारती– स्वामिन्, का प्रतिज्ञा भवतः?

मंडनमिश्रः:– (उच्चैः स्वरेण) वेदस्य कर्मकाण्डभागः एव सत्यम्, ज्ञानकांडभागः तु अर्थवादः । कार्यान्वितेषु पदार्थेषु एव शब्दस्य शक्तिः भवति । चैतन्यरूपं परंब्रह्म च कार्यसंबन्धरहितम् । अतः शब्दात्मिकाः उपनिषदः न सन्ति प्रमाणं परब्रह्मणि । यज्ञादिकर्मसु च वेदानां कर्मकाण्डभागः अस्ति प्रमाणम् । ब्रह्मणि तु न अस्ति किमपि प्रमाणम् । अतः कर्मणा एव मुक्तिः भवति । श्रुतीनाम् प्रामाण्यात् इदम् अहं साधयिष्यामि। यदि इदम् अहं साधयितुं न पारयेय, पराजितः च स्याम्, विहाय सितवाससम् इदं गार्हस्थ्यं, काषायवासाः परिव्राजकः स्याम् । वादे अस्मिन् निर्णयाय जयस्य पराजयस्य वा आत्मनः धर्मपत्न्याः माध्यस्थ्यं अहम् अंगीकरोमि ।

उभयभारती– (उपस्थितान् श्रोतॄन् उद्दिश्य) अत्र उपस्थिताः सर्वे अपि श्रोतारः श्रुतवन्तः प्रतिज्ञातम् उभाभ्यां वादिभ्याम् । (उभौ वादिनौ उद्दिश्य)अतः परम् भवन्तौ वादं प्रारभेताम् ।

मंडनमिश्रः:– हे यतिराज, जीवेश्वरयोः तात्त्विके अभेदे भवतः अभिमते किम् अस्ति प्रमाणम्?

शंकराचार्यः:– छान्दोग्योपनिषदि ऋषिः उद्दालकः श्वेतकेतुं नवकृत्वं वदति तत्त्वमसि श्वेतकेतो इति, इदम् एव अस्ति प्रमाणम् ।

मंडनमिश्रः:– हे योगिन् ! औपनिषदानि हुं फट् सदृशानि तत्त्वमसि इत्यादि वाक्यानि पापक्षयाय जपे विनियोज्यन्ते । निरर्थकानि सन्ति इमानि वाक्यानि ।

शंकराचार्य:- हुं फट् इत्यादि मन्त्राः अप्रतीतार्थकाः, अतः सत्यम् एव अस्ति तेषां जपमात्रे एव विनियोगः, परन्तु तत्त्वमसि इति वाक्यम् तावद् अस्ति प्रतीतार्थकम्, कथम् अस्य जपमात्रे विनियोगः वक्तुं शक्यते?

मंडनमिश्रः- तत्त्वमसि इत्यादि वाक्यैः आपाततः जीवेश्वरयोः अभेदः एव प्रतीयते, परन्तु वस्तुतस्तु स्तावकानि इमानि यज्ञादेः सत्कर्मणः अनुष्ठातुः यजमानस्य, त्वम् असि ईश्वरः इति स्तुत्या। अतः एव न ईदृशानि वाक्यानि स्वतन्त्रतया स्वार्थं बोधयन्ति, प्रत्युत विधिवाक्यानाम् अंगीभूय एव।

शंकराचार्यः- कतिधा विभक्तः अस्ति वेदः?

मंडनमिश्रः- द्विधा विभक्तः अस्ति वेदः।

शंकराचार्यः- अस्यार्थः, वेदः विभक्तः इति अंगीकृतम् भवता।

मंडनमिश्रः- सत्यम्।

शंकराचार्यः- के च सन्ति ते विभागाः?

मंडनमिश्रः- कर्मकाण्डः ज्ञानकाण्डश्च।

शंकराचार्यः- यज्ञादीनाम् विधायकानि वाक्यानि कस्मिन् कांडे सन्ति?

मंडनमिश्रः- कर्मकाण्डे।

शंकराचार्यः- अथ आदित्यो यूपः इति एतेन सदृशानि वाक्यानि?

मंडनमिश्रः- तानि अपि कर्मकांड एव सन्ति।

शंकराचार्यः- सम्प्रति विचारयतु, समानकांडे स्थितानां वाक्यानां परस्परम् अंगांगीभावः भवेत् नाम, स्वेतरकांडे स्थितैः वाक्यैः अंगांगीभावः वाक्यानां कथं सम्भवेत् ? तत्त्वमसि इति वाक्यम् अस्ति ज्ञानकाण्डीयम्, यस्य पार्थक्यं कर्मकाण्डात् भवतः अपि अभिप्रेतः, तत् कथं सिद्धे ब्रह्मणि स्वातन्त्र्येण प्रमाणं सत् विधिवाक्यांगं भवितुमर्हति?

मंडनमिश्रः- सत्यं न भवेत् एव।

शंकराचार्यः- अनेन सिद्ध्यति यत् तत्त्वमसि सदृशानि वाक्यानि निरूपयन्ति वास्तविकम् अभेदं जीवब्रह्मणोः। सफलत्वम् अस्ति प्रामाण्ये प्रयोजकम्, न तु क्रियार्थकत्वम्। अतः सिद्धे ब्रह्मणि उपनिषदः सन्ति प्रमाणम् इति सिद्धम्।

शंकराचार्यपक्ष्यः श्रोतृगणः – विजयताम् विजयताम् ।

मंडनमिश्रः- हे अर्हन्, न सन्ति तत्त्वमसि इत्यादि वाक्यानि कर्मविधेः अंगभूतानि इति मतम्, परन्तु न एतावता ईदृशानां वाक्यानां जीवब्रह्मणोः ऐक्यबोधकत्वम् सिद्धं भवति , मनो ब्रह्मेत्युपासीत इतिवत् एव तत्वमसि इत्यादि वाक्यानाम् अपि समानार्थबोधकत्वात् । मनो ब्रह्मेत्युपासीत इत्यादिभ्यः वाक्येभ्यः यथा अब्रह्मणः मनसः ब्रह्मबुद्ध्या उपास्तिः विधीयते तथा एव तत्वमसि इत्यादि वाक्यैः अपि युष्मत् इति पदेन बोध्यस्य अततः जीवस्य तत्वबुद्ध्या उपासनम् एव विधीयते इति एव मन्तव्यम्।

मंडनमिश्रपक्ष्यः श्रोतृगणः– मीमांसाशिरोमणिः श्रीमण्डनमिश्रो विजयताम् विजयताम् विजयताम् ।

शंकराचार्यः- हे बुद्धिमन्, मनो ब्रह्म इति उपासीत इत्यादिषु वाक्येषु सन्ति उपासीतसदृशानि पदानि, यैः विधिः बोध्यते । न च एतत् अस्ति तत्त्वमसि इत्यादिषु वाक्येषु, तत्र विधिवाचकस्य पदस्य अभावात्, असि इति पदस्य वर्तमानकालस्य बोधकत्वात् । अतः न अनेन वाक्येन उपासना विधीयते ।

शंकराचार्यः पक्ष्यः श्रोतृगणः –यतिश्रेष्ठः श्रीशङ्कराचार्यः विजयताम् विजयताम् विजयताम्।

उभयभारती- हे विद्वांसौ वादिनौ, भवन्तौ अद्य अत्र एव विरमेताम् । यते, भैक्षम् अभ्यवहर्तुं भवान् अभ्यागच्छेत् । स्वामिन् भवान् अपि मांध्यन्दिनम् जेमनं निष्पादयितुं आयातु ।

(सर्वे अशनाय निर्गच्छन्ति)

****

## दृश्यम् – ४

(नीरनेत्र्यः प्रविशन्ति)

नीरनेत्री-१ . महान् विद्वान् भाति अयं नवागन्तुकः यतिः ।

नीरनेत्री-२ अस्माकं मिश्रमहाशयः अपि न अस्ति न्यूनः ।

नीरनेत्री-३ उभौ अपि विद्वांसौ स्वं स्वं पक्षं युक्त्या सुदृढ़या सूपपादयतः ।

नीरनेत्री-२ सख्यः, अपि आकर्णितं युष्माभिः भोक्तुम् आमन्त्रितम् उभयभारत्या? यतिवरं भिक्षितुम्, मिश्रमहाशयं च भोक्तुम् उक्तवती । किं कारणम् एवम् व्यवहृतवती?

नीरनेत्री-१ यतः यतिः यत् आहरति तत् भिक्षा इति उच्यते । मिश्रमहाशयः तु गृहस्थः, तम् भोक्तुम् आमन्त्रयितुम् एव उचितम् ।

नीरनेत्री-३ आम्, सत्यं तव उदितम् ।

नीरनेत्री-१ कालः हि अयं वादारम्भस्य, एत तत्र उपयाम ।

(नीरनेत्र्यः प्रयान्ति)

****

## दृश्यम् - ५

(द्वितीयदिवसीया सभा प्रारभ्यते)

उभयभारती- स्वागतं व्याहरामि उपस्थितेभ्यः सर्वेभ्यः श्रोतृभ्यः । ऋषीन् महर्षीन् च प्रणमामि । उभौ अपि विद्वांसौ वादिनौ वेदस्य ज्ञानकाण्डे निरूपितस्य तत्त्वमसि इति वाक्यस्य अर्थविषयं चर्चितवन्तौ । चर्चा इयं तत्त्वनिर्णयाय क्रियमाणः वादः एव, न तु जल्पः न अपि वितण्डा इति प्रसीदामः वयम्। तत्त्वमसि इति वाक्यम् न अस्ति अर्थवाद-वाक्यम्, न च अपि अनेन उपासना विधीयते । वाक्यम् इदं जीवब्रह्मणोः वास्तविकम ऐक्यम् एव निरूपयति इति प्रतिपादितं यतिशिरोमणिना श्रीशङ्कराचार्येण । अतः परं प्रवर्तयितुम् इमां चर्चाम् अहम् आमन्त्रये विद्वांसौ उभौ वादिनौ । जयस्य पराजयस्य च शंसिनीम् एकां एकां मालां उभयोः कण्ठयोः अर्पयामि ।

(मालाम् अर्पयित्वा, मध्यस्थस्य स्थानं गृह्णाति स्वम् । चर्चायां प्रवर्तमानायां मध्ये मध्ये विधातुं गृहकार्यम् अपैति, उपेत्य च पुनः उपविशति)

शंकराचार्यः- मंडनमिश्रवर, वेदान्तस्य तत्त्वमसि इति वाक्येन बोध्यते जीवब्रह्मणोः अभेदः इति अहम् ह्यः प्रतिपादितवान् । अत्र विषये यद् वक्तव्यं तद् भवान् वदेत् ।

मंडनमिश्रः-  द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति।।मु.उप.३-१-१
श्रुतिः इयं जीवं कर्मणः फलस्य भोक्तारम् ईश्वरं च अभोक्तारं प्रतिपादयति। भोक्तुः अभोक्तुः च अभेदः कथं भवेत् । अतः भोक्तुः जीवात् अभोक्तुः ईश्वरस्य भेदः एव सिद्ध्यति । अभेदस्य प्रतिपादिका श्रुतिस्तु भेदस्य प्रतिपादिकया अनया बाध्यते ।

शंकराचार्यः-  निरक्षरः अपि जानाति जीवे ईश्वरे च भेदम् । प्रत्यक्षसिद्धः सः । प्रत्यक्षसिद्धे च विषये वेदस्य किं प्रयोजनम् ? अन्यत् च निरर्थकं भेदस्य ज्ञानम् । प्रत्युत अनर्थस्य एव हेतुः तत् । अतः भेदस्य प्रतिपादने न भवति श्रुतेः प्रामाण्यम् । अज्ञातस्य अर्थस्य ज्ञापकत्वम् एव भवति प्रमाणानां प्रामाण्यम् इति मतम् मुनेः जैमिनेः । ज्ञातस्य अर्थस्य ज्ञापकत्वे अपि प्रामाण्ये अग्निः हिमस्य भेषजम् इत्यादि अर्थवादवाक्यानाम् अपि प्रामाण्यम् अभ्युपगतम् भवेत्।

मंडनमिश्रः-  इष्टापत्तिः, यतिवर । अर्थवादवाक्यानाम् अपि वेदत्वात् प्रामाण्यम् एव, अतः अपि द्विर्बद्धं सुबद्धं भवति इति न्यायेन प्रत्यक्षेण उपोद्बलितानां तेषां प्रामाण्यं दृढतरं भवति । तथा एव जीवे ईश्वरे च भेदेन प्रत्यक्षेण उपोद्बलितानां भेदश्रुतीनां अपि प्रामाण्यं दृढतरं भवेत् एव, न अभेदश्रुतीनाम् ।

शंकराचार्यः-  एवं तर्हि कृतं वेदप्रामाण्येन । प्रत्यक्षस्य एव प्रामाण्यम् अभ्युपगच्छन्तु। वेदप्रामाण्ये अभ्युपगते तस्य प्रमेयेण अप्रत्यक्षेण भाव्यम् एव-इदम् एव वेदस्य वेदत्वम् -
प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते ।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।। इति मनूक्तेः ।

मंडनमिश्रः-  सत्यम् अभिप्रैति भवान् ,यः एव प्रत्यक्षस्य अविषयः सः एव वेदवेद्यः भवति । प्रत्यक्षविरुद्धं कथं वेदवेद्यं भवेत् । जीवे ईश्वरे च भेदः प्रत्यक्षः एव, तद्विरुद्धं अभेदं वेदः कथं वेदयेत् ?

शंकराचार्यः- जीवेश्वरौ यदि प्रत्यक्षौ स्याताम् तर्हि एव तयोः भेदं प्रत्यक्षं वक्तुं शक्येत । न च अस्ति तथा । किं च अनयोः प्रत्यक्षयोः सतोः सर्वे अपि आस्तिकाः एव स्युः, कः अपि नास्तिकः एव न स्यात् ।

मंडनमिश्रः- सत्यम्, तर्हि भेदस्य प्रतिपादिकायाः श्रुतेः का गतिः भवेत् ? द्वा सुपर्णा इति श्रुत्या स्पष्टं भेद एव प्रतिपाद्यते जीवेश्वरयोः । श्रुतिः इयं जीवं भोक्तारम्, ईश्वरं च अभोक्तारम् वर्णयति । भोक्तुः अभोक्तुः च अभेदः कथं संभवेत् ?

शंकराचार्यः- भोक्तृत्वेन प्रयुक्तः अयं भेदः औपाधिकः न तु वास्तविकः । कथम् अन्यथा जीवेश्वराभ्यां द्वाभ्यां समानः वृक्षः परिष्वक्तः भवेत् ? न हि एकस्मिन् स्थाने द्वौ तिष्ठतः । अतः श्रुत्या वर्णितः भेदः औपाधिकः, न तु वास्तविकः।

मंडनमिश्रः- औपाधिकः अपि भेदः कथम् अपोहितुं शक्यः?

शंकराचार्यः- असन् एव औपाधिकः भेदः कथं न अपोहितुं शक्यः ? यथा निर्मलः स्फटिकः रक्तस्य जपाकुसुमपुष्पस्य सन्निधानेन रक्तः दृश्यते । तद् रक्तत्वं तस्य जपाकुसुमस्य सन्निधानेन भवति, अतः अस्ति औपाधिकम् न तु वास्तविकम्, जपाकुसुमस्य अपोहनेन तत् अपि अपगतं भवति, स्फटिकः च निर्मलः एव तिष्ठति, तद्वत् शुद्धं एकम् एव चैतन्यं कार्यदेहादिरूपायाः व्यष्टेः उपाधेः जीवः इति, कारणसमष्टेः उपाधेः ईश्वरः इति द्विधा विभक्तं दृश्यते । उपाधेः अपगमात् विशुद्धम् एकम् एव चैतन्यं तिष्ठति । न भवति तत्र तयोः भेदः ।

शंकरपक्ष्यः श्रोतृगणः - यतिशिरोमणिः वेदान्तकेसरी भगवत्पादश्रीशङ्कराचार्यः विजयताम् विजयताम् विजयताम् ।

मंडनमिश्रः- सत्यं, द्वासुपर्णाः इति श्रुत्या जीवेश्वरयोः भेदः असाध्यः, परन्तु कठश्रुतिः इयं छायातपौ इव जीवेश्वरौ वर्णयन्ती तयोः भेदम् एव प्रतिपादयति-

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।
छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ।।

(कठो.उप. १-३-१)

न हि भवता अपि छायातपयोः अभेदः स्वीकर्तुं शक्यते ।

शंकराचार्यः- सत्यं छायातपयोः अभेदः न अस्ति, परन्तु अस्ति जीवेश्वरयोः अभेदः। श्रुतिः इयं हि लोकप्रसिद्धम् एव भेदम् अनुवदति केवलम्, न तु प्रतिपादयति, अतः अभेदश्रुतिः न अनया बाधितुं शक्यते । अपूर्वम् अनधिगतार्थं प्रतिपादयन्ती अभेदश्रुतिः, कथम् अनया सपूर्वया प्रत्यक्षार्थम् अनुवदन्त्या बाध्येत । अतः बलवती अभेदश्रुतिः भेदश्रुतेः।

मंडनमिश्रः- एका भेदश्रुतिः या प्रत्यक्षेण उपोद्बलिता, अन्या च अभेदश्रुतिः या प्रत्यक्षेण न अस्ति उपोद्बलिता । अनयोः भेदश्रुतिं विहाय कथम् अभेदश्रुतिं बलवतीं वक्तुं शक्नोति भवान्, या हि न अस्ति प्रत्यक्षेण उपोद्बलिता ।

शंकराचार्यः- हे पंडितप्रवर, अनधिगतार्थगन्तृत्वम् एव भवति प्रमाणानां प्रामाण्यम्। यथा रूपं ज्ञातुं चक्षुः, शब्दं ज्ञातुं श्रोत्रं, गन्धं च ज्ञातुं घ्राणं भवति प्रमाणम् । तद्वत् ।

मंडनमिश्रः- तद्वत् जीवेश्वरयोः अभेदं ज्ञातुं अस्ति श्रुतिः प्रमाणम् इति अभिप्रैति भवान् ?

शंकराचार्यः- सत्यम् - तत् एव अभिप्रैमि ।

मंडनमिश्रः- आः-इदम् अधिगतवान् अहम् । अबाधितम् अनधिगतं फलवत् अर्थजनकं प्रमाणम् इति । चक्षुषा अधिगतं रूपं इन्द्रियान्तरेण बाधितुं अशक्यम् एव । ईदृशे रूपे एव इन्द्रियान्तरेण अनधिगते एव फलवत् अर्थजनकं चक्षुः प्रमाणं भवितुम् अर्हति ।

शंकराचार्यः- तथा एव उपनिषदाम् अपि प्रामाण्यम् अभ्युपगतं भवेत् ननु?

मंडनमिश्रः- सत्यम् । लोकप्रसिद्धः भेदः जीवेश्वरयोः । अतः भेदः अयम् अधिगतः एव न अनधिगतः, प्रत्युत अभेदः एव अनधिगतः अबाधितः च बोधितः च तत्त्वमसि इत्यादि वाक्यैः। अभेदस्य अस्य एव बोधने भवति उपनिषदां प्रामाण्यम् ।

शंकराचार्यः- अभ्युपगते च अभेदे उपनिषत्प्रामाण्ये, तत्र फलेन अपि केनचित् भाव्यम् एव ननु ?

मंडनमिश्रः- अवश्यम् एव तत्र आनन्दस्वरूपेण ईश्वरेण जीवस्य ऐक्ये अवगते जीवस्य अपि आनन्दरूपत्वम् एव सेत्स्यति इति भवति एव फलम्।

शंकराचार्यः- किं तेन? तस्य आनन्दस्य उपलब्धये स्वर्गः गन्तव्यः भविष्यति किम्?

मंडनमिश्रः- न ।

शंकराचार्यः- तर्हि किं कर्तव्यं भविष्यति?

मंडनमिश्रः- न किम् अपि । यस्य उपलब्धये अनुष्ठाय यज्ञादि स्वर्गः गन्तव्य आसीत् सः अस्ति मम स्वरूपम् एव इति ज्ञात्वा कर्तव्यं किम् अपि न अवशिष्यत एव अतः मुक्तः एव अस्मि अहम् ।

शंकराचार्यः- तर्हि कः अर्थः इदानीं पत्न्या. पुत्रेण , धनेन, यज्ञादिसाधनैः, स्वयं गृहस्थाश्रमेण अपि?

मंडनमिश्रः- यदि न अर्थः तर्हि वैदिकैः कर्मभिः एव कः अर्थः?

शंकराचार्यः- अस्ति अर्थः तैः । तानि हि भवन्ति द्वाराणि विधातुं मुमुक्षुं जिज्ञासुम् ।

मंडनमिश्रः- भवन्ति द्वाराणि....अर्थात् अनन्तरं जिज्ञासायाः उत्पत्तेः.....

शंकराचार्यः- अनन्तरं किं कर्मभिः? विधाय यज्ञादि.....

मंडनमिश्रः- अलम् अलम् एतावता गुरुदेव, मा मां जिह्रिपत् भवान् । विहाय आश्रमं द्वितीयं उद्यतः अस्मि तुरीयं स्वीकर्तुम् । शरणागतः अस्मि शिष्यः भवतः।

शंकराचार्यपक्ष्याः श्रोतारः - यतिशिरोमणिः भगवत्पादश्रीशङ्कराचार्यः विजयताम् विजयताम् विजयताम् ।

उभयभारती- हे विद्वन्, पंडितप्रकांडः अयं मम पतिः न एतावता अपि भवता कार्त्स्न्येन जितः । अहम् अस्मि अस्य अर्धांगिनी । न अस्मि अहम् जिता भवता । भवता वादं विधातुं उत्कण्ठते मे हृदयम् ।

शंकराचार्यः- हे अबले, भवत्या सह वादः न उचितः, यतः यशस्विनः न विवदन्ते वनिताभिः ।

उभयभारती- पुरुषो वा भवेत्, स्त्री वा स्यात्, प्रत्याख्यातारम् आत्मनः जेतुं यत्नः

अवश्यं करणीयः स्वपक्षं रिरक्षिषुणा । अतएव गार्ग्या याज्ञवल्क्यः ऋषिः, सुलभया च विदेहराजः जनकः वादं कृतवान् । किं स्त्रिया सह वादेन ते न अभवन्, यशस्विनः?

शंकराचार्यः- भवतु मातः, यथा इच्छति भवती । पृच्छतु तावत् ।

उभयभारती- हे ईश, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता इति - तैत्तिरीया इयं श्रुतिः जीवब्रह्मणोः भेदम् एव भाषते । भवतः अभिमतेन अभेदेन ननु विरुद्धम् एतत्?

शंकराचार्यः- हे मातः, भवत्या भावितः अर्थः न अस्ति अस्याः तैत्तिरीयश्रुतेः । श्रुतेः अर्थस्तु - निवृत्ताज्ञानः मुक्तः पुरुषः ब्रह्मभूतः ब्रह्मस्वरूपेण एव सर्वज्ञेन सर्वगतेन सर्वात्मना नित्येन ब्रह्मात्मस्वरूपेण धर्मादि-निमित्तानपेक्षान् चक्षुरादिकरणनिरपेक्षान् च सर्वान् कामान् सह एव अश्नुते इत्यर्थः अस्ति।

उभयभारती- स्यात् एतत्, आत्मा वा अरे द्रष्टव्यः इति बृहदारण्यकोपनिषदः श्रुतिः द्रष्टृत्वदृश्यत्वाभ्याम् आत्मनः भेदम् एव प्रतिपादयति । द्रष्टुः आत्मनः दृश्यः आत्मा भिन्नः भवेत् एव । असति च भेदे, न इयं श्रुतिः प्रमाणं स्यात् ।

शंकराचार्यः- न इयं श्रुतिः आत्मनः कर्तृत्वं कर्मत्वं वा प्रतिपादयति प्रत्युत आत्मनः इतरस्य सत्त्वं निषेधन्ती, लोकसिद्धस्य द्रष्टव्यस्य श्रोतव्यस्य मन्तव्यस्य निदिध्यासितव्यस्य च सर्वस्य अपि आत्मरूपत्वम् एव प्रतिपादयति।

उभयभारती- यदि एवम्, कथं न तर्हि तत् तथा दृश्यते?

शंकराचार्यः- सूपपाद्यम् इदम् । पटेन आवृतः घटः न दृश्यते तथा एव मायादिभिः आवृतः अपि आत्मा न दृश्यते । वस्तुतस्तु द्रष्टा आत्मा आत्मानम् एव द्रष्टव्यं पश्यति, परन्तु न आत्मरूपेण, प्रत्युत अनात्मरूपम् एव आत्मानं पश्यति । आत्मरूपज्ञानेन आत्मनः अज्ञानं येषां नाशितं भवेत् ते एव आत्मानं यथारूपं पश्यन्ति । ईदृशाः आत्मविदः न अन्तरयन्ति आत्मपरमात्मानौ ।

उभयभारती- स्वीकरोमि आत्मपरमात्मनोः अभेदं, यतिवर ! इदानीम् अत्र एव वयं विरमामः। आचार्यदेव, भैक्ष्यम् आदातुं भवान् आगच्छतु । स्वामिन्

भवान् भोक्तुम् आगच्छतु ।

(सर्वे भोजनशालां प्रति प्रतिष्ठन्ते)

नीरनेत्री-२ प्रवर्तमाने वादे विद्वांसौ उभौ अपि शोभमानौ अभूताम् अजेयौ योद्धारौ इव।

नीरनेत्री-१ ओष्ठयोः उभयोः मन्दं स्मितम् अदर्शि । मुखमंडले च प्रसादः अभूत्।

नीरनेत्री-३ तनौ न अभूत् स्वेदः कम्पः वा ।

नीरनेत्री-२ मनसा अवहितेन उभौ अपि वादिनौ प्रसन्नौ अन्योन्यस्य प्रश्नानाम् उत्तराणि ददतौ अभूताम् ।

नीरनेत्री-३ न च तौ मध्येवादं खसूची कुसूची वा अभूताम् ।

नीरनेत्री-२ तथापि विधातुं पराजितम् अन्योन्यम् उभौ अपि आयसताम्तमाम्, न च पारुष्येण अल्पेन अपि अभ्यभाविषाताम् ।

नीरनेत्री-३ पुरुप्रेम्णा प्रावर्तिष्ट उभयोः वादः ।

नीरनेत्री-२ सत्यम्, परम् अवसाने उपपादिताभिः उपपत्तिभिः मिश्रमहाशयः तस्य धर्मपत्नी च निरुत्तरौ जोषम् अस्थाताम् ।

नीरनेत्री- यतिशिरोमणिना भगवत्पादाचार्येण युक्तिभिः तर्कैः प्रमाणैश्च सूपपादितः आत्मनः पक्षः ।

नीरनेत्री-२ उभयभारत्या अपि अनुमोद्यन्ते स्म दृढाः युक्तीः आचार्यवरस्य ।

नीरनेत्री-१ अवसाने च उभयभारती , यान् प्रश्नान् पृष्टवती तेषाम् अपि उत्तरदानेन कृतवान् मूकां ताम् आचार्यवरः ।

(नीरनेत्र्यः साधयन्ति)

***

## दृश्यम् - ७

(अन्तिमदिवसीया सभा प्रारभ्यते)

मंडनमिश्रः- हे यतिराज, अभूतपूर्वेण अनेन मम पराजयेन न अल्पम् अपि दूये । परन्तु प्रत्याख्यातानि जैमुनिमुनेः वचनानि इति दूयते मे हृदयम् । जैमुनिमुनिना प्रणीतानि सूत्राणि कथं वा निरर्थकानि भवितुम् अर्हन्ति।

कथं वा तानि निरर्थकानि स्युः?

शंकराचार्यः- न अत्र प्रत्याख्यातानि जैमुनिमुनेः वचनानि, न च भ्रान्तम् जैमुनिमुनिना, केवलं न अधिगतं भवति तस्य अभिमतम् अविद्वद्भिः ।

मंडनमिश्रः- कः तर्हि यथार्थः तस्य वचनानाम् इति कृपया भवान् ब्रवीतु नः ।

शंकराचार्यः- तमेतं वेदानुवचनेन ब्राह्मणाः विविदिषन्ति यज्ञेन दानेन तपसा अनाशकेन - श्रुतिः इयं विधत्ते वेदाध्ययनं, यज्ञं, दानं, तपः, उपवासादीन् च, केवलं ज्ञानसाधनत्वेन परब्रह्मणः । तथैव ब्रह्मज्ञाने अनधिकृतान् अधिकृतान् विधातुम् एव कर्मणां विधानम् अभिप्रायत् तत्रभवान् भगवान् जैमिनिः ।

मंडनमिश्रः- सर्वाणि वेदवाक्यानि आत्मनि पर्यवस्यन्ति इति व्यवस्यन् अपि जैमिनिमुनिः अभ्युपगम्य कर्मणां फलदातृत्वं कथं प्रत्याख्याति ईश्वरम्?

शंकराचार्यः- केचन दार्शनिकाः अनुमान्ति ईश्वरं, जगतः कर्तारं घटकुम्भकारदृष्टान्तेन, फलदातारं च कर्मणाम् ईश्वरं वदन्ति । अयम् एव आनुमानिकः ईश्वरः जैमिनिमुनिना प्रत्याख्यातः । यतः तं त्वौपनिषदं पुरुषं पृच्छामि इत्यादिभिः श्रुतिवाक्यैः स्पष्टम् एव ज्ञायते यत् ईश्वरः न अनुमानादेः विषयः प्रत्युत वेदैकवेद्यः ।

मंडनमिश्रः- अधिगतं भवति मया, भवतः अभिप्रेतम् । याथार्थ्यं वेदानाम् अधिगच्छन् अहं नितरां प्रसीदामि, किन्तु संशये, किं सत्यम् एव एतत् सर्वं जैमिनिमुनेः अपि अभिमतं भवेत्?

(ध्यायति जैमिनिं मुनिम् । जैमिनिमुनिः च स्वयम् आविर्भवति)

जैमिनीमुनिः- हे सन्मते मण्डनमिश्र, मा समशयिष्ट वचनेषु भाष्यकारस्य श्रीशङ्कराचार्यस्य । मम सूत्राणां भाष्यकारेण वर्णितः अभिप्रायः यः स मम एव, न तु तद्विपरीतः कश्चन अस्ति अन्यः । अतः हे उत्तम यशस्विन्, निर्विशयः शृणोतु ममेदं विविक्तं वचः -

आद्ये सत्त्वमुनिः सतां वितरति ज्ञानं द्वितीये युगे
दत्तो द्वापरनामके तु सुमतिर्व्यासः कलौ शङ्करः ।

इत्येवं स्फुटमीरितोऽस्य महिमा शैवे पुराणे यत -
स्तस्य त्वं सुमते मते त्ववतरेः संसारवार्धि तरेः ।।(शं.दि. ९-२२)

(एवम् उक्त्वा मुनिः जैमिनिः अन्तर्धत्ते)

मंडनमिश्रः- धन्यः अस्मि धन्यः अस्मि, गुरुदेव, अद्य अहं अस्मि संवृत्तः धन्यः। हे परमगुरो, लोकः तावत् स्तौति हनूमन्तम्, येन हि महता प्रयत्नेन राक्षसीभिः आवृता पत्नी परमात्मनः रामस्य केवलं दृष्टा, न तु ततः मोचिता । भवता इतः अविद्याराक्षसीभिः परिवृतः परमात्मा एव उदरदारं राक्षसीनां मोचितः । मन्ये भवे पूर्वस्मिन् भवेत् किमपि तपः तप्तं मया, अतप्तपूर्वम् अन्येन केन अपि, येन अहं लब्धवान् सौभाग्यं संवदितुं जगदीश्वरेण करुणासागरेण ।

चिन्तासन्तानशाखी पदसरसिजयोर्वन्दनं नन्दनं ते
सङ्कल्पः कल्पवल्ली मनसि गुणनुतेर्वर्णना स्वर्णदीयम् ।
स्वर्गो दृग्गोचरस्त्वत्पदभजनमतः संविचार्येदमार्या
मन्यन्ते स्वर्गमन्यं तृणवदतिलघुं शङ्करार्य त्वदीयाः ।।

(शं.दि.९-४२)

तदहं विसृज्य सुतदारगृहं द्रविणानि कर्म च गृहे विहितम् ।
शरणं वृणोमि भगवच्चरणावनुशाधि किङ्करममुं कृपया ।।

शं. दि. ९-४३

(मतिमता मंडनेन एवं वर्णिताः आचार्यस्य गुणाः । यतेन्द्रियेण यतीन्द्रेण शङ्कराचार्येणापि दयितुं मण्डनस्य प्रहिता दृष्टिः तस्य पत्न्यै। अवगताशया मंडनपत्नी अवदत्)

उभयभारती- हे यतिप्रवर, वेद्मि अहं भवतः अभिलषितम् । शिशुः एव अहम् इदं भाविभाषितं तापसस्य मुखात् अश्रौषम् । शुभ्रेण भूतिना भूषिततनुः भास्करः इव भासमानः तापसः कश्चन एकदा अस्माकं गृहम् आगतः। आतिथ्यं तस्य विहितवती मम माता तापसं तं अपृच्छत् मम आयतिम्। तापसः हि क्षणं निमीलिताक्षः उन्मील्य चक्षुषी एवम् अचष्ट -

(तापसस्वरः)- असंख्यातैः अवैदिकैः मतैः अदर्शनं गमिते अत्र पृथिव्यां वेदमार्गे तस्य उद्धाराय ब्रह्मा स्वयम् अवतरिष्यति मंडनमिश्रनाम्ना । पार्वती शिवम् इव, लक्ष्मी विष्णुम् इव आसादयिष्यति तव इयं कन्या पतिं मंडनमिश्रम् । इष्ट्वा बहुविधैः यज्ञैः धरिष्यते दीर्घम् प्रमोदमाना ।

(मातुः स्वरः)- प्रियं मे ननु इदम् । ततः किं प्रवर्तिष्यते देव?

(तापसस्वरः)- तदा उच्छृंखलैः कुबुद्धिभिः नाशितप्रायम् औपनिषदं सिद्धान्तम् उज्जीवयितुं अलंकरिष्यति स्वपादपद्मभिः इमां पृथिवीं मानुषं रूपम् आस्थितः महादेवः। तेन यतिवेषेण शङ्करेण सह प्रवर्तिष्यते वादः तव कन्याभर्तुः । स च पराजितः अस्मिन् वादे विहाय गार्हस्थ्यं व्रजिष्यति शरणं तपस्विनं तं जगतः एकं शरणम् ।

उभयभारती- यथोदितम् एव तपस्विना वृत्तम् एतद् । हे ब्रह्मन्, सदाशिवः त्वं साक्षाद् सर्वविद्यापतिः, सर्वभूताधिपतिः, ब्रह्मणः च अधिपतिः । हे परमात्मन् , हे स्तुत्य, न अस्ति त्रपा मनाक् अपि अस्माकं त्वया पराजितानाम् । सूर्येण अभिभूतस्य अपि चन्द्रमसः न अपकीर्तिः भवति । सम्प्रति अनुजानीहि मां स्वधामगमनाय ।

शंकराचार्यः- हे देवि, चिन्मात्ररूपा अपि भवती बिभर्ति लक्ष्म्यादीनां रूपाणि , गोपायितुं जगत् । वेद्मि अहं भवतीं महादेवसहोदरां साक्षाद् ब्रह्मणः प्रियपत्नीं, वाण्याः आदिदेवताम् । प्रार्थये शारदाभिधाना भवती भवेत् नित्यं संनिहिता अस्माकं ऋष्यशृङ्गादिस्थानेषु, वांछितस्य फलस्य दात्री च पूजकेभ्यः।

उभयभारती- साधु यते, प्रतिगृह्णामि भवतः आज्ञाम् । हे देव, सर्वेषाम् अपि मम भर्तुः प्रश्नानाम् उत्तराणि वेदाविरुद्धानि सतर्काणि च भवता दत्तानि । वेदानां तात्पर्यम् अस्माभिः अन्यथा एव गृहीतम् आसीत् । निवार्य भ्रान्तिम् अस्माकं उन्मीलितवान् भवान् द्वारं द्रष्टुं वेदस्य याथार्थ्यम् । वादिभ्याम् उभाभ्यां कण्ठयोः धारिते माले एव स्वयं निर्णयतः

जयपराजयम्, यतः मम भर्तुः कण्ठे निहिता माला स्पष्टम् एव म्लाना दृश्यते, तथापि निर्णेतुः कर्तव्यम् अनुतिष्ठन्ती अहम् प्रख्यापयामि पराजयं मम भर्तुः ।

शंकराचार्यपक्ष्यः श्रोतृगणः – श्रीमत्परमहंसपरिव्राजकाचार्याः व्याख्यासिंहासनाधीश्वराः मीमांसामतदूषकाः ब्रह्मात्मैक्यबोधाब्जविभाकराः श्रीमच्छङ्कराचार्यवर्याः विजयन्तेतराम् विजयन्तेतराम् विजयन्तेतमाम् ।

(दुन्दुभिनादः भवति । देवैः पुष्पवृष्टिः क्रियते)

(मंडनमिश्रः संन्यासे दीक्ष्यते । काषायवस्त्रः वासयन्)

शंकराचार्यः– सुरेश्वराभिधानः भव ।

(नेपथ्ये)

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे।। कै.उप.१-४

उभयभारती– देवौ, उभौ अपि भवन्तौ ग्रहीतुं भैक्षम् एताम् ।

अद्वैत वैजयन्ती नामकः अवसितः चतुर्थोऽङ्कः ।

***

# पञ्चमोऽङ्कः

## स्थानम् : श्रीशैलम्

(पात्राणि – गुरुः, जिज्ञासुः, मुमुक्षुः, भगवान् शंकराचार्यः, शिष्याः, कापालिकः पूर्वं ब्राह्मणवेशः, अनन्तरं कापालिकवेशः, भगवान् नृसिंहः)

प्रवेशकः

(गुरुः द्वौ शिष्यौ च प्रविशतः)

जिज्ञासुः– गुरुदेव, मंडनमिश्रः आसीद् वैदिकः गृहस्थः किं कारणम् आचार्यदेवः तं संन्यासिनं कृतवान् ?

मुमुक्षुः– भर्तुः संन्यसनेन उभयभारती अपि असंशयं क्लिष्टा भवेत् ।

गुरुः– मंडनमिश्रः ब्रह्मा एव अवतीर्णः आसीत्, उभयभारती च अवतीर्णा सरस्वती।

उभौ शिष्यौ– अहो आश्चर्यम् ।

गुरुः– वैदिकस्य वर्णाश्रमधर्मस्य पुनः स्थापना भवेत् इति संकल्प आसीत् कुमारिलभट्टस्य । अस्य एव सिद्धये साहाय्यम् आचरितवन्तौ तौ दम्पती गार्हस्थ्यस्य वैदिकस्य सम्यक् अनुष्ठानेन ।

जिज्ञासुः– तर्हि किं कारणम् संन्यास्थत् ?

गुरुः– उपनिषदः वेदानां ज्ञानभागः । ताः उपदिशन्ति यत् वेदविहितानां कर्मणाम् अनुष्ठानेन मनुष्यस्य अन्तःकरणानि शुद्ध्यन्ति । शुद्धेषु च तेषु ईश्वरविषयिणी, आत्मस्वरूपविषयिणी जिज्ञासा जायते ।

मुमुक्षुः– अर्थात् यज्ञादीनि वेदविहितानि कर्माणि अनुतिष्ठतः मंडनमिश्रस्य मनसि उद्भूता आत्मजिज्ञासा ।

गुरुः– सत्यम्, अवतीर्णस्य तस्य तत् एव आसीत् कार्यम्, प्रवर्त्य लोकं वेदविहिते कर्मणि उपकर्तुम् आचार्यम् वेदस्य ज्ञानकाण्डस्य संस्थापने।

जिज्ञासुः– अर्थात् सर्वम् इदं देवाधिदेवेन श्रीशङ्करेण संकल्पितस्य फलम् एव आसीत्।

गुरुः– सत्यम्, सम्यक् अवबुद्धवान् भवान् । सुरेश्वराचार्यः आचार्यदेवस्य नितान्तं प्रौढः विद्वान्, आज्ञाकारी च शिष्यः आसीत् । भगवता

शङ्कराचार्येण उपनिषदां भाष्यम् कृतम् तस्मिन् भाष्ये श्रीसुरेश्वराचार्येण वार्तिकानि रचितानि, अतः सः वार्तिककारः इति नाम्ना प्रख्यातः अभवत् । आयत्याम् अभवत् स आचार्यः प्रथमः द्वारकाशारदामठस्य।

मुमुक्षुः- अथ उभयभारती ?

गुरुः- भगवता शङ्कराचार्येण आदिष्टा उभयभारती अधिष्ठात्री देवीरूपा न्यवसत् चतुर्षु अपि मठेषु शङ्कराचार्येण स्थापितेषु ।

जिज्ञासुः- साधु एतावता अधिगतं, संन्यसिते अपि पत्यौ किंकारणम् दम्पती प्रासीदताम्। एवम् एव ननु मुमुक्षो?

मुमुक्षुः- सत्यम्, सत्यम्, एवम् एव । आचार्यदेवः ततः कुत्र गतः गुरुदेव?

गुरुः- महाराष्ट्रप्रान्ते स्थितं श्रीशैलम् गतः आचार्यदेवः, सुरेश्वराचार्येण अन्यैश्च शिष्यैः सह । तत्र आचार्यदेवेन अभ्यमित्रयितव्यः अभवत् कश्चन कापालिकः, शैवतांत्रिकसांप्रदायिकः ।

(गुरुः शिष्यः च निर्गच्छतः)

****

दृश्यम् - १

(शिष्यैः सह, प्रविशति शङ्कराचार्यः)

शिष्यः-३ वयम् इह महाराष्ट्रप्रान्ते स्थितं श्रीशैलं प्राप्ताः स्म, गुरुदेव ।

शिष्यः-२ भारतवर्षीयेषु द्वादशसु ज्योतिर्लिङ्गेषु अन्यतमम् मल्लिकार्जुननाम शिवलिङ्गं अत्र एव अस्ति ।

शंकराचार्यः- एत शिष्याः, व्रजामः वयं द्रष्टुं भगवन्तं मल्लिकार्जुनम्, स्थितं तटे पातालगंगायाः, उपाद्रिं द्रवन्त्याः, तरङ्गितायाः, कलिमलस्य अपनेत्र्याः, तिरस्कर्त्र्याः च उच्छ्रितानाम् महीध्राणाम् ।

(नेपथ्ये)

श्रीशैलशृङ्गे विविधप्रसङ्गे शेषाद्रिशृङ्गेऽपि सदा वसन्तम् ।
तमर्जुनं मल्लिकपूर्वमेनं नमामि संसारसमुद्रसेतुम् ।।

शिष्यः-४ प्रदेशे अस्मिन् भैरवस्य उपासकाः एव महिमावन्तः सन्ति ।

शिष्यः-२ उपासकानाम् एषां कः सम्प्रदायः?

शंकराचार्यः- अयम् एकः अस्ति उग्रः शैवतान्त्रिकः सम्प्रदायः एतत् साम्प्रदायिकाः षड्मुद्रिकाः धारयन्ति मालाम्, अलंकारं, कुण्डलं, हारं भस्म यज्ञोपवीतं च।

शिष्यः-२ प्रायः जनाः बिभ्यति तान्त्रिकेभ्यः । किं कारणम् अस्य भवेत् ? तान्त्रिकाः जनाः नारेण अस्थ्ना निर्मितां मालां धारयन्ति, श्मशाने वसन्ति, नरकपालं तेषां भोजनपात्रम् । एतत् अतिरिच्य एते योगाभ्यासेन विलक्षणसिद्धिमन्तः अपि भवन्ति ।

(ब्राह्मणवेशः उपैति एकः कापालिकः)

कापालिकः- आचार्यदेव, रहसि भवता किमपि आलिलपिषामि ।

(शङ्कराचार्यः शिष्येभ्यः किञ्चिद्दूरं गच्छति)

कापालिकः- हे मुने, सर्वज्ञः भवान्, सुशीलः दयालुः च इति श्रुतवान् अहं द्रष्टुं भवन्तं नितरां उत्कंठितः आसम् । अद्य भवतः स्थानम् अत्र इति श्रुत्वा द्रष्टुं भवन्तम् अत्र आगतः अस्मि ।

शंकराचार्यः- भद्रम् ।

कापालिकः- परोपकाराय एव भवता देहः अयं धृतः । दानशीलः भवान् । उपेत्य भवन्तं न कः अपि असन्तुष्टः अपैति । सर्वेषां मनोरथदायकः भवान्।

शंकराचार्यः- कः तव मनोरथः?

कापालिकः- शतं वर्षाणि अहं तीव्रं दुष्करं च, सन्ततं तपः तप्तवान् विजिहीर्षुः कैलासे महादेवेन, अनेन एव शरीरेण ।

शंकराचार्यः- भद्रम्, भद्रतरम् ।

कापालिकः- मम तपसा प्रसन्नः महादेवः माम् आदिष्टवान् आहोतुम् अग्नौ शिरः कस्य अपि राज्ञः सर्वज्ञस्य वा ज्ञानिनः पुरुषस्य ।

शंकराचार्यः- ततः? अपि त्वम् आहुतवान् ?

कापालिकः- इयम् एव अस्ति समस्या मुनिवर ।

शंकराचार्यः- किम् ? अत्र का समस्या?

कापालिकः- राज्ञः चक्रवर्तिनः वर्णिनः वा कस्य अपि नैष्ठिकस्य मुनिवरस्य शिरः अपेक्ष्यते।

अनयोः अशक्यलभ्यम् एव राज्ञः शिरः इति भवान् अवगच्छति एव ।

शंकराचार्यः- आम् । इदम् तावत् सत्यम् ।

कापालिकः- अवशिष्टं यत् तत् शिरः कस्य अपि वर्णिनः मुनिवरस्य । अथ...अन्यस्य विषये तु.... भवान् स्वयं सर्वज्ञः, नैष्ठिकः वर्णी मुनिवरः । शिरसः दानेन अवाप्स्यति भवान् जगति महतीं कीर्तिम् अहं च अद्भुतां सिद्धिम् ।

शंकराचार्यः- तथास्तु ।

कापालिकः- परन्तु न उत्सहे शिरः याचितुं भवतः । कः अपि ना किं कारणं यच्छेत् आत्मनः तनुम् ? यद्यपि परम् उपकर्तुम् एव सता भवता शरीरम् इदं धृतम् अस्ति । विरक्तः च भवान् अस्ति देहाभिमानात् मुक्तः । अस्ति अत्र निदर्शनम् परोपकर्ता ऋषिः दधीचिः यः हि अयच्छत् इन्द्राय आत्मनः अस्थीनि वज्रं निर्मातुम् । .....यद्यपि न मता भवेत् इयं मम प्रार्थना सज्जनानाम् तथापि किम् अस्ति अदेयं भवादृशानाम् ज्ञानिनां पुरुषाणाम् । अतः हे भगवन्, ददातु शिरः भवतः मह्यम् । नमस्करोमि अहम् भवन्तम् ।

(साष्टांगं प्रणमति)

शंकराचार्यः- न लक्षये कम् अपि दोषं तव प्रार्थिते । उद्यतः अस्मि प्रेम्णा आत्मनः शिरः दातुम् । नारीम् इमां तनुं नाना अनर्थानाम् प्रभवाम् विद्वान् कः न प्रतिपादयेत् आत्मनः ताम् अर्थिने । कालः अयं चिकवलयिषुः एव अस्ति शरीरम् इदम् । तावता केन अपि प्रयुक्तम् इदं भवेत्, किम् अतः परं साधुतरं स्यात् ?

कापालिकः- धन्यः भवान्, धन्यः भवान् । एतत् एव आशासितम् आसीद् भवतः।

शंकराचार्यः- परन्तु सर्वेषु अवलोकयत्सु यच्छेयम् अहम् आत्मनः शिर इति न युक्तं प्रतिभाति । रहसि मयि समाधौ विद्यमाने त्वम् आगच्छेः शिरः च मम समोदम् अपनयेः ।

कापालिकः- अनुगृहीतः अस्मि मुनिवर भवता । तदा एव आगमिष्यामि ।

(साधयति कापालिकः)

शंकराचार्यः- शिष्याः भिक्षाम् अटितुम् अनुज्ञाताः स्थ ।

शिष्याः- यथा आज्ञापयति गुरुदेवः ।

(शिष्याः भिक्षाम् अटितुं निष्क्रामन्ति)

****

## दृश्यम् - २

(सिद्धासनेन आसीनः शङ्कराचार्यः दृश्यते । विवृतं मुखम् । हस्तौ ऊरौ अधस्तलौ निहितौ स्तः । दृष्टिः नासिकाग्रे निहिता अस्ति । नेत्रे सामि मीलिते। उन्नीतः अग्रिमः भागः । ज्ञानम् एव अवशिष्टम् । विस्मृता अशेषा सृष्टिः। तदा एव उपैति शङ्कराचार्यम् कापालिकः, त्रिशूलहस्तः, भसितभूषितभालः, कण्ठे अस्थिमालः, आवर्तयन् अक्षिणी रक्तरक्ते, मद्यमाद्यती )

कापालिकः- (उपसृत्य शङ्कराचार्यम्)जयतु जयतु शंकर महादेवः । अद्य अहं निवेदयिष्यामि भवते, नैवेद्यं सर्वज्ञस्य वर्णिनः । ततः सशरीरम् उपेत्य भवन्तं मोदिष्ये....हा...हा...हा...अट्टहासं करोति ।

पद्मपादः- (पथि व्रजन् विरम्य) कश्चन धर्षयति इव भाति मे गुरुदेवम् । किं कारणम् स्यात् ? अग्निः इव दन्दह्यमाने मयि गुरोः शुश्रूषायाम् रते अपि कस्य इदं धाष्ट्यं भवेत् ? कः अयम् ? (नितरां क्रुद्धः) हे भगवन् नृसिंह, आयातु सत्वरम्, रक्षतु मम गुरुदेवम् ।

श्रीमत्पयोनिधिनिकेतन चक्रपाणे
भोगीन्द्रभोगमणिरातिपुण्यमूर्ते ।
योगीश शाश्वत शरण्य भवाब्धिपोत
लक्ष्मीनृसिंह मम देहि करावलम्बम्।।

लक्ष्मीनृसिंहकरुणारसस्तोत्रम् १

(नृसिंहेन आविष्टः पद्मपादः घोरं गर्जन् धावति, अपविध्य कापालिके त्रिशूलम्, उरः तस्य विदारयति, विकटं च अट्टहासं करोति ।

एतावता सर्वे शिष्याः निवर्तन्ते)

शिष्याः- अहो किं कारणम् अयम् अट्टहासः श्रूयते अस्माभिः ।

सुरेश्वरः- मा स्म विपद्ग्रस्तः भवेत् गुरुदेवः अस्माकम् ।

शिष्यः-१ आयन्तु, वयं क्षिप्रं तत्र प्राप्नुयाम, यत्र अस्माकं प्राणप्रियः गुरुदेवः अस्ति समाधिस्थः ।

(सर्वे धावन्तः उपयन्ति । कापालिकं प्रेतं गुरुं च समाधिस्थं पश्यन्ति। उच्चैः हुं कुर्वन् भगवान् नृसिंहः गर्जति)

(वीतभयः शङ्कराचार्यः तम् उपेत्य स्थितः आनन्दाश्रुभिः रुद्धकंठः स्तौति)

शंकराचार्यः- नरहरे हर कोपमनर्थदं तव रिपुर्निहतो भुवि वर्तते ।
कुरु कृपां मयि देव सनातनीं जगदिदं भयमेति भवद्दृशा ।।६०।।
द्रष्टुं न शक्या हि तवानुकम्पा हीनैर्जनैर्निह्नुतकोटिशम्पाम् ।
मूर्तिं तदात्मन्नुपसंहरेमां पाहि त्रिलोकीं समतीतसीमाम् ।।शं. दि.११/७०

भगवन्, उपसंहृत्य इमां रौद्रीं रुष्यन्तीं च आत्मनः मूर्तिं त्रायताम् इयं त्रिलोकी । दयस्व प्रभो दयस्व, प्रसीद ।

(अट्टहासम् एकं विधाय अन्तर्धत्ते भगवान् नृसिंहः)

(नेपथ्ये)

लक्ष्मीपते कमलनाभ सुरेश विष्णो
यज्ञेश यज्ञ मधुसूदन विश्वरूप
ब्रह्मण्य केशव जनार्दन वासुदेव
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।१३।।

एकेन चक्रमपरेण करेण शङ्ख-
मन्येन सिन्धुतनयामवलम्ब्य तिष्ठन् ।
वामेतरेण वरदाभयपद्मचिह्नं
लक्ष्मीनृसिंह मम देहि करावलम्बम् ।।१४ ।। लक्ष्मीनृसिंहकरुणारसस्तोत्रम्

( अवसितः देहदानोद्यतता नामकः पंचमोऽङ्कः)

***

# षष्ठोऽङ्कः

## ( स्थानम् : श्रीवलिग्रामः )

(पात्राणि : गुरुः, जिज्ञासुः, मुमुक्षुः, शङ्कराचार्यः, शिष्याः,
माता, पिता, बुद्धिहीनः युवा हस्तामलकश्च)

प्रवेशकः

(गुरुः द्वौ शिष्यौ च प्रविशतः)

जिज्ञासुः मुमुक्षुश्च –अभिवादये अहं भोः गुरुदेव ।

**गुरुः**– स्वस्ति अस्तु वत्सौ ।

**जिज्ञासुः**– गुरुदेव, मोक्षः नाम किम् ?

**मुमुक्षुः**– मोक्षः नाम मुक्तिः । मोक्षः अर्थात् स्वतन्त्रता । कस्य अपि बन्धनस्य अभावः । यद् रोचते, तत् एव करोति, अयम् एव मोक्षः ।

**जिज्ञासुः**– अपि एतत् वचनं मुमुक्षोः सत्यं गुरुदेव?

**गुरुः**– मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः ।
श्रुतयो यत्र गच्छन्ति तत्र गच्छन्ति ते नराः ।।
कामचारः पशूनां वानराणां लक्षणम्, श्रुतिस्मृतिपुराणादिभिः विहितेषु प्रवर्तनम्, निषिद्धात् च निवर्तनम् अस्ति मनुष्यस्य लक्षणम् ।

**जिज्ञासुः**– यदि अहं संयतः जीवेयम्, ऐन्द्रियकविषयान् त्यजेयम्, सज्जनः स्याम् शुश्रूषुः च स्याम् तेन किं लभेय? अपि स्वर्गं लभेय?

**गुरुः**– वत्स, प्राणिनः सर्वे अपि भोगम् इच्छन्ति इति सत्यम्, तदर्थं सर्वे प्रयतन्ते अपि, इति अपि सत्यम् । परन्तु एतत् अस्ति विचारणीयम् यत् ऐहलौकिकाः भोगाः इव सन्ति पारलौकिका अपि भोगाः क्षयिष्णवः एव । स्वयं स्वर्गः एव अस्ति नश्वरः । अतः ऐहलौकिकी इव पारलौकिकी अपि एषणा न अस्ति बुद्धिमतः लक्षणम् ।

**मुमुक्षुः**– गुरुदेव, सर्वैः अपि सम्प्रदायैः प्रायः सत्याहिंसादय एव आचरितुम् आदिश्यन्ते। सत् आचरन्तु, सत् एव भवन्तु इति एव उपदिशन्ति

सर्वे । तर्हि किम् उपदेशकानाम् भेदे अपि उपदेशस्य अभेद एव अस्ति इति स्वीक्रियेत । अतः सर्वे अपि इमे सम्प्रदायाः मोक्षसाधने विकल्पाः एव इति कथं न अङ्गीक्रियेत?

गुरुः- न, कदापि न । अनिर्णीते गन्तव्ये तत्प्रापकं वाहनं कथं निर्णेतुं शक्येत? सत्याहिंसादयः सन्ति साधनानि । परन्तु साध्यम् अनवबुद्धस्य न इमे परिणमन्ति । अनिर्ज्ञाते गन्तव्ये अनिर्णीते वा, प्रवहणप्रवेकेन अपि किम्?

जिज्ञासुः- इदं तावत् सत्यम् ।

गुरुः- अतिरिच्य अद्वैतवेदान्तं मोक्षः भवति प्राप्तव्यः , सर्वेषु दर्शनेषु । अद्वैतवेदान्ते अस्मिन् न अस्ति मोक्षः प्राप्तव्यः, परन्तु अस्ति अधिगन्तव्यः। प्राप्तव्यं हि वस्तु भिद्यते प्रापकात् । प्राप्तव्यं सुखम् आत्मनः भिन्नम् इति द्वैतदर्शनम् । सुखम् अधिगन्तव्यम् आत्मनः स्वरूपम् इति अस्ति अद्वैतदर्शनम् ।

जिज्ञासुः- परन्तु द्वैतदर्शने कः दोषः - नित्यं सेवा, नित्यं कीर्तनम्, नित्यम् उत्सवः, नित्यं निरीक्षेम नन्दकुमारम् सर्वम् एतत् आनन्ददम् अस्ति द्वैते । अद्वैते किम् अस्ति? द्वैते दर्शनं, द्वैते सेवा, द्वैते संगमः....

गुरुः- विरहः अपि द्वैते एव भवति । यत्र संगमः, तत्र विरहः अपि भवेत् एव । सुखदुःखे गतागतशीले भवतः । भगवति तथा सति, संगते तस्मिन् सुखं, विरहे च दुःखं स्यात् एव । तदा अनित्यत्वम् एव भगवतः प्रसज्येत। अहम् इह अस्मि नित्यः । अतः त्वम्, यथा वदसि न तथा साध्यरूपा भक्तिः सती भवितुम् अर्हति । साधनरूपा सा कामं तथा भवेत् ।

मुमुक्षुः- सत्यम्, इदम् तावत् सत्यम् ।

जिज्ञासुः- भगवतः नृसिंहस्य दर्शनानन्तरं कुत्र गतः आचार्यदेवः, गुरुदेव?

गुरुः- यतिचक्रवर्ती शङ्कराचार्यः परिव्रजन् आत्मनः अन्तेवासिभिः, अटन् च अनेकान् तीर्थान्, प्राप्तवान् गोकर्णनामकं तीर्थम्, त्रातारं धर्मस्य, घोरात् कलियुगात् ।

मुमुक्षुः- निकषा तीर्थम् इमम् विजृम्भते प्रचण्डवेगः वारिधिः ।

जिज्ञासुः- प्राणमत् आचार्यदेवः महेश्वरं, अखर्वगर्वसूदनं दुष्टानां, आश्लिष्टं च वामे देव्या पार्वत्या ।

नमः शिवाभ्यां नवयौवनाभ्यां परस्पराश्लिष्टवपुर्धराभ्याम् ।
नगेन्द्रकन्यावृषकेतनाभ्यां नमो नमः शङ्करपार्वतीभ्याम् ।।

उमामहेश्वरस्तोत्रम् १

मुमुक्षुः- तीर्थयात्री गुरुगरीयान् शङ्कराचार्यः क्षिप्रमेव गोकर्णात् हरिशंकर नामकं तीर्थम् आगच्छत् यत्र सः भगवन्तं शङ्करम् अस्तौत् ।

गुरुः- आचार्यदेवेन द्वादशभिः पद्यैः कृतायाः स्तुतेः एकैकेन पद्येन शिवः अपि स्तूयते, विष्णुः अपि स्तूयते । विष्णुपरेषु अपि पद्येषु एकैकेन पद्येन भगवतः दशावतारेषु एकैकः अवतारः स्तूयते ।

मुमुक्षुः- शिवविष्णू उभौ अपि संस्तूय गिरा मधुरया, प्रसीदन् मुनिराजः मूकांबिकादेवालये देवीम् अस्तौत्, ततः च श्रीवलिग्रामम् अगच्छत्। तत्र च आचार्यदेवः उदधरत् एकं मन्दमतिम् बालम् ।

दृश्यम् - १

(दम्पती परस्परं संलपन्तौ दृश्येते)

माता- ननु श्रृणोतु, यतिः कश्चन आयातः मूकांबिकायाः दर्शनाय । ब्राह्मणदम्पत्योः व्यसुः अपि वटुः उज्जीवितः इति श्रूयते ।

पिता- सत्यम्, अहम् अपि श्रुतवान् अस्मि एतत् ।

माता- मूकांबिकां भगवतीं स्तुतवान् अयं यतिः आयाति अभिमुखम् एव अस्माकं ग्रामस्य।

पिता- अग्रहारः अयम् अस्माकं ब्राह्मणानां श्रीवलिग्रामः ।

माता- अत्र एकैकस्मिन् गृहे अग्नौ हूयते । अग्निहोत्रे प्रयुक्तेन पयसा पृक्तेन पवनेन प्रदेशः अयम् अखिलः अपि पवित्रः सुगन्धरमणीयः च वरीवर्ति ।

पिता- अस्माकं ग्रामे द्वे सहस्रं ब्राह्मणाः, अग्निहोत्रं नित्यं जुह्वति । अनेन

ग्रामस्य परिसरः पूयते एव ननु ।

माता– वयम् अपि इह अग्निहोत्रं जुहुमः ।

पिता– तेन एव अस्माकं गृहम् अपि सम्भृतम् अस्ति भूतिभिः गोभिः गोभिः वित्तेन बन्धुभिः ज्ञातिभिः च , सर्वाभिः सम्पद्भिः सम्पन्नम् अस्ति अस्माकं गृहम् । किं न अस्ति ?

माता– (दीर्घं निःश्वसन्ती) सत्यम् सर्वम् अपि इदं विद्यते एव अस्माकं गृहे। केवलं पुत्रः एव न अस्ति मतिमान् । नितरां जडः अस्माकं पुत्रः। विना पुत्रीयं सुखं, किम् एभिः वैषयिकैः सुखैः ।

पिता– न मम अपि ऊनं दुःखं पुत्रीयम् ।

माता– तर्हि किं न आवाम् नयेव इमम् आत्मनः पुत्रं तं यतिम् ।

पिता– साधु चिन्तितं तव ।

(शिष्यैः सह शङ्कराचार्यः ततः एव संचरन् अस्ति । जयघोषः श्रूयते)

(नेपथ्ये)

भगवत्पादस्य शङ्कराचार्यस्य जयः अस्तु, सनातनवैदिकधर्मस्य जयः अस्तु।

माता– आचार्यदेवस्य दर्शनाय आवां व्रजावः, तदर्थं किमपि उपायनं आनयतु । अहम् इह तावत् अस्माकं पुत्रम् अन्विष्य आनयामि ।

पिता– सत्यम्, न शून्यहस्तः नृपम् इष्टदेवं गुरुं च यायात् इति श्रूयते, अतः अहम् अपि पुष्पाणि, पुष्पमालां च आनयामि ।

(उभौ निष्क्रामतः)

***

दृश्यम् – २

(शिष्यैः सह आचार्यः प्रविशति । दृष्टिः निपतति एकस्मिन् यूनि पतिते पृथिव्यां, वसाने पाटितपटे, अस्यति च बालुकां बाहुभ्याम्)

युवा– वाचारम्भणं विकारः नामधेयम् । मृत्तिका इति एव सत्यम् ।

(व्रजन्तं शङ्कराचार्यं दृष्ट्वा धावति, ततः स्वपिति । सर्वम् इदं शङ्कराचार्यः पश्यति । किञ्चिद्दूरं गत्वा शिष्यैः सह उपविशति ।

तत्र ब्राह्मणदम्पती बालकम् आकर्षन्तौ धावन्तौ प्राप्नुतः)

दम्पती– प्रणमावः प्रभो ।

(पुष्पमालाम् अर्पयतः । फलम् अर्पयतः । पतिः साष्टांगं प्रणमति, पत्नी पञ्चाङ्गम्। उभौ व्यथितौ स्तः । सुतं शङ्कराचार्यचरणयोः पातयतः । आत्मनः जडत्वं निवेदयन्

सः न उत्तिष्ठति । आचार्यः कृपया तस्य मुखम् उदनयत् , तदा स उदतिष्ठत्)

शंकराचार्यः– (दम्पती प्रति) वदताम्, कः तावद् विशेषः? किं कारणं भवन्तौ विषण्णौ दृश्येते?

पिता– प्रभो मम अयं पुत्रः नितरां जडः । त्रयोदशवर्षदेशीयेन अपि अनेन अक्षरज्ञानम् अपि न अधिगतम् ।

माता– प्रभो, किं कारणं भवेत् अस्य जाड्यस्य?

पिता– अस्माभिः कथंचित् उपनीतः अपि अयं न अधीते वेदं न किम् अपि शिक्षते ।

माता– मित्रैः रन्तुम् आहूतः अपि न रमते । मूर्खः अयम् इति असत्कृतः अपि न क्रुध्यति तेभ्यः ।

पिता– कदाचित् अयम् अश्नाति, कदाचित् न अश्नाति । सर्वथा अपि अयम् अस्ति कामचारः । तथापि अस्मै क्रुद्धेन मया न अयं कदापि ताडितः ।

माता– वपुषा वर्धमानः अपि अयं यथाजातः एव अस्ति । जाड्यम् अस्य पश्यतोः आवयोः वेपते हृदयम् । प्रभो, भवति भवन्ति अशेषाः शक्तयः । अनुगृह्य माम् अपनयतु मम पुत्रस्य जाड्यम् ।

(पादयोः शिरःपातं रुदितः)

शंकराचार्यः– (बालकम् उद्दिश्य) कः त्वम् । किम् एवं जडवत्प्रवृत्तः ?

युवा– नाहं जडः किन्तु जडः प्रवर्तते ।

मत्सन्निधानेन न सन्दिहे गुरो ।

षडूर्मिषड्भावविकारवर्जितं
सुखैकतानं परमस्मि तत्पदम् ।।

शंकराचार्यः- कस्त्वं शिशो कस्य कुतोऽसि गन्ता
किं नाम ते त्वं कुत आगतोऽसि
एतन्मयोक्तं वद चार्भक त्वं
मत्प्रीतये प्रीतिविवर्धनोऽसि ।।१।।

युवा- गुरुवर, न अहं मनुष्यः, न अस्मि देवः । यक्षः, ब्राह्मणः, क्षत्रियः, वैश्यः, शूद्रः च अपि न अहम् अस्मि । न अहम् अस्मि ब्रह्मचारी, गृही यतिः वा ।

शंकराचार्यः- तर्हि कः त्वम् ?

युवा- अहम् अस्मि स्वयं ज्ञानस्वरूपः ।
निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधिराकाशकल्पः ।
रविर्लोकचेष्टानिमित्तं यथा यः स नित्योपलब्धिस्वरूपोऽहमात्मा ।।३।।
घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा निष्प्रभं मन्यते चातिमूढः ।
तथा बद्धवद्भाति यो मूढदृष्टेः स नित्योपलब्धिस्वरूपोऽहमात्मा ।।१२।।

शंकराचार्यः- अहो, युवा अयम् अनुपदिष्टः एव अधिगतपरमात्मतत्त्वः अस्ति । महत् एतत् आश्चर्यकरम् ।
(शिरसि यूनः करं करोति , युवा ततः अपैति)

शंकराचार्यः- न अर्हति अयं युवा भवता वासम् । किं वा लब्धं भवेत् अनेन सह वासेन भवता?

पितरौ- तर्हि किम् आदिशति प्रभुः?

शंकराचार्यः- पूर्वस्मात् भवात् एव अस्य योगिनः शरीरे अस्मिन् न विद्यते आसक्तिः, तर्हि पदार्थान्तरेषु आसक्तेः प्रश्नः एव न उद्भवति । युवानम् इमं मह्यम् अर्पयेद् भवान् । आत्मनि इमं वर्तयिष्यामि ।

पिता- बालः अयं किम् उपकरिष्यति भवन्तं आचार्यदेव?

शंकराचार्यः- बालः अयं ज्ञानसागरः । लोकः अयम् अनेन भविष्यति श्रेयोवान्।

(श्रुतवन्तौ एतत् पितरौ विस्मयेन आविष्टौ अभवताम् । इतः युवा स्वयम् एव आगत्य प्रणमति शङ्कराचार्यम्)

पिता- कथम् अहं कीर्तयामि भवतः प्रभावम् येन लोकजडः अपि अयं बालः समक्षम् आगतः एव निरूपयिता कृतः तत्त्वस्य, विद्वद्भिः अपि दुर्निरूपस्य।

माता- जन्मतः एव संसृतेः बन्धनात् मुक्ते अस्मिन् बाले शिष्यत्वं गते भवतः, वयम् अपि भवामः धन्याः ।

शंकराचार्यः- युवा अयं हस्तामलकवत् तत्त्वं सुस्पष्टं वेत्ति, अतः अयं हस्तामलकः इति नाम्ना ख्यातः भविष्यति । (गैरिकं समर्प्य वासः) हस्तामलकाभिधानो भव।

(नेपथ्ये)

दह्रं विपापं परमेश्मभूतं यत्पुण्डरीकं पुरमध्यसंस्थम् ।
तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ।।

***

## ( स्थानम् : शृङ्गगिरिः )

### ( पात्राणि : शंकराचार्यः, शिष्याः, गुरुः, जिज्ञासुः मुमुक्षुश्च)

(गुरुः शिष्यः च प्रविशतः)

मुमुक्षुः- गुरुदेव, किं कारणं हस्तामलकाचार्यः जड इव व्यवहरति स्म? किं कारणं तिरस्कृतः अपि जनैः, सः सर्वंसहः आसीत् ?

गुरुः- जडवल्लोके आचरेत् इति शास्त्रम् एव आदिशति ज्ञानिनम्, यतः बन्धुभिः व्यवहरन् तेषु आसक्तः भवेत् सः इति भीतिः तु भवति एव। हस्तामलकः तु पूर्वस्मात् भवात् एव आसीद् योगी, अतः एव जन्मतः एव आसीत् अयम् पराङ्मुखः संसारात् । न अस्य मनः रमते स्म इन्द्रियाणाम् अर्थेषु ।

जिज्ञासुः- तर्हि किं कारणं सः समवदत् आचार्येण भगवत्पादेन?

गुरुः- अनुभावविशेषः अयम् आसीत् महात्मनः ज्ञानिनः तस्य आचार्यदेवस्य येन अस्य विषयेभ्यः व्यावृत्ता आत्मोन्मुखी चित्तवृत्तिः अभवत् आकृष्टा। अनेन एव हस्तामलकः अपि याथार्थ्यम् आत्मनः प्रत्यभिज्ञापयितुं प्राभवत् ।

मुमुक्षुः- अर्थात् हस्तामलकः आजन्मनः आत्मवित् आसीत् ?

गुरुः- सत्यम्, स्वयं वायुदेवः एव हस्तामलकरूपेण अवतीर्णः अभवत् । अतः एव आचार्यदेवः अपि तम् आत्मनः शिष्यम् अकरोत् । अनन्तरं च शृङ्गगिरिपीठे तं प्रथमं आचार्यम् अपि अकरोत् ।

जिज्ञासुः- अतिरिच्य इमान् त्रीन् शिष्यान्, अपि अभवत् कः अपि अन्यः शिष्यः आचार्यदेवस्य? कुत्र संगतः सः?

गुरुः- आम्, कदाचिद् हस्तामलकादिभिः शिष्यैः आचार्यः शृङ्गगिरिं प्रति प्रस्थितः। तत्र एकस्मिन् दिने ....

(गुरु शिष्यः च निष्क्रामतः)

****

दृश्यम् - ३

(स्वाध्यायार्थम् आस्ते आचार्यः । समक्षं आसते शिष्याः।
स्वाध्यायः यावत् न आरब्धः तावता.. )

पद्मपादः- समेतः समयः स्वाध्यायस्य गुरुदेव!

शिष्याः- शिष्याः अपि प्रायः समे समेताः ।

सुरेश्वरः- एतावता अपि गुरुणा पाठः न आरभ्यते । प्रतीयते, कः अपि प्रतीक्ष्यते।

शिष्यः-३ कः तावद् प्रतीक्षितः स्याद् । ननु समे अपि समेताः एव ।

पद्मपादः- शांतिपाठम् आरभेमहि गुरुदेव?

(दूरे वस्त्राणि क्षालयन्तं गिरिं निर्दिशन् वदति शङ्कराचार्यः)

शंकराचार्यः- गुरोः वासांसि क्षालयितुं गतः अस्ति गिरिः, एषः आयाति एव ।

(पद्मपादाचार्यः समक्षं उच्छ्रितां भित्तिं करेण निर्दिशन् वदति)

पद्मपादः- किं न वयं समक्षं स्थिताम् इमां भित्तिम् एव अवगच्छेम गिरिम् । यथा इयं भित्तिः तथा असौ गिरिः । उभौ अपि न अवगच्छतः किम् अपि ।

शंकराचार्यः- (मनसि)गिरिः मां सततं साधु सेवते । अस्ति सः यत् किञ्चित् मन्दमतिः, परन्तु एतावता भवेत् उपहासपात्रम् इति न अस्ति उचितम्। अनेन प्रतिभाति प्रतिभावताम् एषां शिष्याणां दर्पः आत्मनः प्रतिभाविषयकः। एतत् अपि ननु अस्ति अनुचितम् एव ।

(निमील्य चक्षुषी उत्तम्भयति हस्तं वरदम् । कालेन अल्पेन एव उपैति गिरिः, नृत्यन्, गायन्)

गिरिः- विदिताखिलशास्त्रसुधाजलधे महितोपनिषत्कथितार्थनिधे ।
हृदये कलये विमलं चरणं भव शङ्कर देशिक मे शरणम् ।।
भव एव भवानिति मे नितरां समजायत चेतसि कौतुकिता ।
मम वारय मोहमहाजलधिं भव शङ्कर देशिक मे शरणम् ।।
भगवन्नुदधौ मृतिजन्मजले सुखदुःखझषे पतितं व्यथितम् ।
कृपया शरणागतमुद्धर मामनुशाध्युपसन्नमनन्यगतिम् ।।

(सर्वे शिष्याः साश्चर्यं समुत्थानेन सम्मानयन्ति तम्)

पद्मपादः- अहो किम् अपि गायन् इव भाति गिरिः ।

सुरेश्वरः- सत्यम् सत्यम् तोटकछन्दसा गुरुं स्तौति सः ।

पद्मपादः- परन्तु नितरां मन्दमतिः अस्ति असौ । कथम् एतत्, विद्वान् असौ संवृत्तः भवेत्?

शिष्यः-३ जडबुद्धिः अयम्, अतएव गुरुं सेवमानः एव भवति ।

शंकराचार्यः- धन्यः असि त्वं गिरे । श्लाघनीया तव गुरुशुश्रूषा । गुरौ श्रद्धया भक्त्या च अनायासम् एव विद्याः चतुर्दश अधिगतवान् असि ।

पद्मपादः- चतुर्दशविद्याः अधिगतवान् ? गिरिः?

सुरेश्वरः- वस्तुतः गिरिः गुरुम् अत्यन्तं शुश्रूषते । सर्वदा आचार्यम् अनुसरति । मितं भाषते । धर्मं च आत्मनः पालयति ।

शिष्यः- गुरोः स्नानात् पूर्वम् एव स्नाति अयम् । कम्बलैः वस्त्रादिभिः च विदधाति गुरोः आसनम् मृदु उच्छ्रितं च । यथाकालं यथाशास्त्रं उपकल्पयति दन्तधावनादिकम् । शौचार्थं बहिर्गते आचार्यदेवे

व्यवस्थापयति तदर्थं जलम् मृदं च ।

सुरेश्वरः- परिमार्जयितुं वपुः गुरवे ददाति सविनयम् अयं पटम् । पादसंवाहने अपि अयं निपुणः, छाया इव सदा अनुगच्छति गुरुम् ।

पद्मपादः- अवितथं वचः युष्माकं सर्वेषाम् । सत्यम् एव अस्ति गिरिः सत्तमः गुरुभक्तः। गुरोः समक्षं कदापि न जृम्भते । न आस्ते प्रसारितपादः । यथादिष्टम् अनुतिष्ठति क्षिप्रम् । उत्थिते गुरौ उत्तिष्ठति, उपविष्टे च उपविशति। सविनयम् आकर्णयति गुरोः वचः । अनादिष्टः अपि प्रवर्तमानः भवति हितसाधने गुरोः ।

शंकराचार्यः- गिरे, तव गुरुभक्त्या त्वम् अद्य विद्वान् कृतः असि । हे सोम्य, तोटकाभिधानः भव । येन छन्दसा गायन् त्वम् उपागतः असि, तेन त्वं भविष्यसि वित्तः।

(नेपथ्ये)

यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परस्स महेश्वरः ।।

पद्मपादः- गुरो, क्षन्तव्यः अहम् । गुरुशुश्रूषागुणः न मया अवगतः । गुरुभक्त्यैकसाध्या गुरुकृपा एव शिष्यस्य श्रेयस्करं सत्तमं साधनम् इति एषः अवगतवान् अस्मि अहम् ।

(साष्टाङ्गं प्रणमति)

सर्वे शिष्याः- सर्वे अपि वयं क्षन्तव्याः, गुरुदेव !

(सर्वे साष्टाङ्गं प्रणमन्ति)

शंकराचार्यः- सुरेश्वर, सर्वे अपि अन्तेवासिनः यूयं यदि कतिचन ग्रन्थान् रचयेत, कीदृशं शोभनं तद् भवेत् ?

सुरेश्वरः- गुरुदेव, अस्माभिः यत् कर्तव्यं तत् निर्विकल्पम् आदिशतु, यतः हि यावद् गुरौ भक्तिः तावत् जीवन् जीवति जनः इति वक्तुं शक्नुमः ।

शंकराचार्यः- नितरां प्रसन्नः अस्मि तव अनया गुरुभक्त्या सुरेश्वर । इच्छामि ग्रन्थम् एकम् अद्वैतविषयकं, त्वया विरचितम् ।

सुरेश्वरः- यथा आज्ञापयति गुरुदेवः ।

शंकराचार्यः- पद्मपाद, ब्रह्मसूत्रेषु अस्माकं भाष्यस्य वृत्तिम् एकां त्वं विरचयेः ।

पद्मपादः- बाढम् गुरुदेव !

(कतिपयेभ्यः दिवसेभ्यः परम् सुरेश्वराचार्यः पद्मपादाचार्यः च उपेतौ गुरुम्, स्वविरचिताभ्यां ग्रन्थाभ्याम्)

सुरेश्वरः- यथा आदिष्टं भवता, ग्रन्थम् इमं नैष्कर्म्यसिद्धिनामकम् अहं रचितवान् अस्मि । न ख्यातये, न लाभाय, न च आत्मानं पूजयितुं, केवलं कर्तुं गुरोः वचः मया एतत् अनुष्ठितम्।

शंकराचार्यः- उपहर सुरेश्वर, निरीक्षेय तव ग्रन्थम् । (अवलोकयति) साधु सुरेश्वर, ग्रन्थे अस्मिन् यज्ञादिकर्मणां मर्यादां निरूपयता त्वया नैष्कर्म्यसिद्धिः केनचित् उद्भटेन वेदान्तिना इव कृता अस्ति ।

पद्मपादः- गुरुदेव, अहम् अपि इमां पञ्चपादिकां रचितवान् अस्मि, विवृतिं भवता रचितस्य ब्रह्मसूत्रभाष्यस्य ।

शंकराचार्यः- (ग्रन्थं हस्ते आदाय अवलोकयन्) पद्मपाद, ग्रन्थे अस्मिन् न्याय्यम् एव मम भाष्यम् विवृतम् अस्ति ।

पद्मपादः- अनुगृहीतः अस्मि प्रभो !

(साधयन्ति सर्वे)

शंकराचार्यः- (स्वगतम्) अद्य मदीया वृद्धा माता मम दृष्टिपथम् आगता इव दृश्यते । पश्चिमे वयसि वर्तमाना मे माता अस्तंगन्तुकामा इव भाति । सत्वरम् एव मया तत्र उपस्थातव्यम् ।

(शिष्यवात्सल्यनामकः अवसितः षष्ठः अङ्कः)

***

# सप्तमः अङ्कः

## ( स्थानम् : कालडीग्रामे मातुः गृहम् )

(पात्राणि – शङ्कराचार्यः, माता, सम्बन्धिनः, पतिः पत्नी च)

दृश्यम् – १

(कालडी ग्रामस्य एकस्मिन् गृहे दम्पती परस्परं संलपतः)

पति– अपि श्रुतं किमपि त्वया? यतीश्वरः शंकरः आयाति मातरं द्रष्टुम् ।

पत्नी– सत्यम्? तर्हि तं द्रष्टुं प्रभविष्यावः ।

पति– परित्यज्य गृहं प्रव्रजन् प्रतिश्रुतवान् आसीत् मात्रे यत् अहम् उपस्थास्ये अन्तकाले भवतीम्, अन्त्येष्टीः च सर्वाः अनुष्ठास्यामि ।

पत्नी– अहो माहात्म्यम् महात्मनाम् । मात्रे प्रतिश्रुतस्य न विस्मरन्ति । (शङ्कराचार्यः ग्रामं प्रविशति । तं दृष्टवन्तः जनाः सविस्मयं मनोमोदम् आविर्भावयन्ति)

सज्जनः–१ अपि दृष्टम् ? शंकरयतीश्वरः आगच्छति ।

सज्जनः–२ किम्? शङ्करः ?

सज्जनः–५ किम्, शङ्करभगवत्पादः ?

सज्जनः–१ हुं , शङ्कराचार्यः शङ्कराचार्यः ।

सज्जनः–२ ननु सः एव शङ्करः यः वादे मण्डनं जितवान् ?

सज्जनः–३ सः एव एषः शङ्करः यतीश्वरः मातरं द्रष्टुम् आगतः ।

(तावता उपेतः शङ्कराचार्यः वदति)

शङ्कराचार्यः– का प्रवृत्तिः मम मातुः?

सज्जनः–४ कालम् एव प्रतीक्षमाणा आस्ते ।

सज्जनः–५ कालं प्रतीक्षमाणा स्यात् अपि भवन्तं दिदृक्षमाणा कालं यापयति इति वयं भावयामः ।

शंकराचार्यः– हुं...( मातरम् उपसर्पति , चरणयोः प्रणमति , माता उन्मीलति नेत्रे ) एषः अहम् अस्मि शंकरः , तव पुत्रः, मातः ।

आगतः अस्मि अहम् । अलं शुचा । माम् आदिश मातः, किम् अहं त्वदर्थं कुर्याम्?

(बहुभ्यः दिवसेभ्यः परं पुत्रं कुशलिनं दृष्टवती प्रसन्ना माता मन्दं मन्दं अब्रवीत्)

माता- वत्स, परमायाम् अस्याम् अवस्थायाम् अहं त्वां कुशलिनं पश्यामि। त्वं सेवमानः असि भारतमातरं वेदभगवन्तं, ततः च मानवमात्रम्। किम् अतः परं मम अपेक्षितं भवेत्, गर्विता अस्मि मम पुत्रेण । ईश्वरं च अहं प्रार्थये यत् देशस्य अस्य भारतवर्षस्य एकैका जननी प्राप्नुयात्, पुत्रं त्वादृशम् । धन्या संवृत्ता अस्मि प्राप्य त्वां पुत्रम् । पुत्र, न अहम् अतः परं धारयितुं प्रभवामि शरीरम् इदं जीर्णशीर्णम् । हे पुण्यचरित, संस्कृत्य शास्त्रविधिना प्रापय मां स्वर्गलोकम् ।

शंकराचार्यः- आस्तां तावदियं प्रसूतिसमये दुर्वारशूलव्यथा
नैरुच्यं तनुशोषणं मलमयी शय्या च सांवत्सरी ।
एकस्यापि न गर्भभारभरणक्लेशस्य यस्याः क्षमो
दातुं निष्कृतिमुन्नतोऽपि तनयस्तस्यै जनन्यै नमः ।।

शंकराचार्यः- मातः, कृष्णम् अहं प्रार्थये । त्वम् अपि मनसा श्रीकृष्णस्य स्वरूपं ध्यायेः -

श्रिया श्लिष्टो विष्णुः स्थिरचरगुरुर्वेदविषयो
धियां साक्षी शुद्धो हरिरसुरहन्ताऽब्जनयनः ।
गदी शङ्खी चक्री विमलवनमाली स्थिररुचिः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ।।१।।
यदा धर्मग्लानिर्भवति जगतां क्षोभकरणी
तदा लोकस्वामी प्रकटितवपुः सेतुधृगजः ।
सतां धाता स्वच्छो निगमगुणगीतो व्रजपतिः
शरण्यो लोकेशो मम भवतु कृष्णोऽक्षिविषयः ।।८।। कृष्णाष्टकम्

माता- श्रीकृष्ण, श्रीकृष्ण....श्रीकृष्ण प्रभो, नय माम् आत्मनः धाम....

श्रीकृष्ण, श्रीकृष्ण कृष्ण..... कृष्ण ...

(शंखचक्रगदापद्महस्तः भगवान् श्रीविष्णुः आविर्भूय दृग्गोचरः भवति)

(नेपथ्ये)

इति हरिरखिलात्माराधितः शङ्करेण
श्रुतिविशदगुणौऽसौ मातृमोक्षार्थमार्यः ।
यतिवरनिकटे श्रीयुक्त आविर्बभूव
स्वगुणवृत उदारः शङ्खचक्राब्जहस्तः ।।

(भगवन्तं विष्णुं पश्यन्, माता चक्षुषी निमीलयति)

(नेपथ्ये)

न मे मृत्युशङ्का न मे जातिभेदः
पिता नैव मे नैव माता न जन्म ।
न बन्धुर्न मित्रं गुरुर्नैव शिष्य -
श्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ।।

अवसितः मातृभक्तिनामकः सप्तमोऽङ्कः ।

***

# अष्टमोऽङ्कः

## ( स्थानं - केरलप्रदेशे किमपि रमणीयं स्थानम् )

(पात्राणि - गुरुः, जिज्ञासुः, मुमुक्षुः, शङ्कराचार्यः, शिष्याः च )

प्रवेशकः

( गुरुः शिष्यश्च प्रविशतः )

गुरुः- एतावता दिग्दिगन्तेषु प्रसृता अभवत् ख्यातिः श्रीतोटकाचार्यस्य । प्रतिभया पद्मपादसमः वायुदेवस्य दशांशेन अवतीर्णः तोटकाचार्यः शंकरस्य शिष्येषु चतुर्षु गण्यः अभवत् । भाविनि सः अभवत् आचार्यः अपि प्रथमः ज्योतिष्पीठस्य ।

जिज्ञासुः- गुरुदेव, किं शंकराचार्यस्य इमे चत्वारः एव शिष्याः अभवन् ?

गुरुः- न, न, बहवः हि शिष्याः अभवन् तस्य । यतयः अपि, तस्य शिष्याः चतुर्भ्यः अधिकाः एव अभवन् । सर्वे अपि ते अवतीर्णा देवाः आसन् - आनन्दगिरिः आसीत् अवतीर्णः बृहस्पतिः, चित्सुखः च अवतीर्णः वरुणः इत्यादि।

मुमुक्षुः- परन्तु अत्र चत्वारः एव शिष्यत्वं गताः गुरोः इति निरूपितम् । एवम् एव ननु ?

गुरुः- सत्यं, तथा एव अस्ति ।

जिज्ञासुः- परन्तु सर्वान् शिष्यान् विधातुं, तान् काषायवाससः कर्तुं किम् आवश्यकम् आसीत् ?

गुरुः- अस्माकं वैदिकपरम्परायां एकैकस्य वर्णस्य आश्रमस्य च जनस्य कर्तव्यानि नियतानि सन्ति । सर्वैः अपि यथाकर्तव्यम् एव आचरितव्यं भवति।

मुमुक्षुः- अर्थात् काषायवस्त्रस्य धारणं भवति आचारः चतुर्थे आश्रमे संन्यासे सर्वस्वस्य परित्यागरूपे । तथैव ननु?

गुरुः- सत्यम्, आचारः अपि अस्ति, लक्षणम् अपि अस्ति । वर्णः अपि अयं प्रेरयति यतिं, स्थातुम् अकल्मषम् ।

जिज्ञासुः- यथा हि अग्निवर्णेन संसूच्यते यत् उपगते यतौ भस्मीभवन्ति दोषाः सर्वे।

गुरुः- अथ एतत् अपि यत् संन्यस्तस्य न भवन्ति यज्ञादीनि कर्तव्यानि । सर्वथा आत्मानम् एव ज्ञातुं तेन प्रयतनीयम् ।

मुमुक्षुः- परन्तु यतयः हि बहवः सततं सेवमानाः दृश्यन्ते, तत् किम् ?

गुरुः- सत्यम् । प्रारब्धेन प्रेरितः परिव्राड् अपि जगतः मंगलाय प्रवर्तितुं शक्नोति । एतत् अपि आत्मनः ज्ञानस्य साधनम् एकं भवति तस्य ।

जिज्ञासुः- अन्यत् च अभिज्ञातः भवति यतिः आत्मनः काषायेण वस्त्रेण लोकेन, यथा ब्रह्मचारी मेखलया, दण्डेन जटाभिः कटिवस्त्रेण प्रत्यभिज्ञायते, गृहस्थश्च उत्तरीयाधोवस्त्राभ्याम् प्रत्यभिज्ञायते, शाटिकया चोलिकया आभूषणैः च कुमारिका, सिन्दूरपूरितसीमन्तेन परिणीता प्रत्यभिज्ञायते, तद्वत् ।

गुरुः- सत्यम्, यथावत् अवगतवन्तौ भवन्तौ । इत्थम् अधिगत्य चतुरः मुख्यान् शिष्यान् आचार्यः प्रतिष्ठापितवान् चतुरः मठान् चतसृष्वु अपि दिक्षु स्थितेषु चतुर्षु धामसु, तथाहि – दक्षिणस्यां दिशि भारतवर्षस्य शृङ्गगिरौ, पूर्वस्यां जगन्नाथपुर्याम्, पश्चिमायां द्वारिकायां, उत्तरस्यां च बदरीनाथे।

(गुरुः शिष्यः च निर्गच्छतः)

***

## दृश्यम् – १

(प्रविशति शङ्कराचार्यः शिष्यैः सह)

शंकराचार्यः- भवन्तः सर्वे अपि जानन्ति एव यत् अस्माभिः निर्णीतम् अस्ति संस्थापयितुं सांस्कृतिकं राष्ट्रियं च ऐक्यं भारतभूमेः ।

सर्वे शिष्याः- आम् गुरुदेव!

शंकराचार्यः- यत् इदम् अस्माभिः परिव्रजितम्, न तत्र अस्ति प्रयोजनम् जगतः परित्यागः। विपन्नस्य विश्वस्य परित्राणाय, लोकस्य कल्याणाय संन्यस्तम् अस्माभिः । संन्यस्य उद्धरिष्यामि सनातनं धर्मम् इति एव आसीत् मया संकल्पितम् ।

सुरेश्वरः- गुरुदेव, विदितः एव अस्ति अस्माभिः भवतः अयं शिवसंकल्पः। सिद्धये अस्य संकल्पस्य किम् अतः परं कल्पितम् अस्ति भवता?

शंकराचार्यः- विन्दे अहं स्थापिताः स्युः चत्वारः मठाः, चतसृषु अपि दिक्षु भारतवर्षस्य, संरक्षणाय प्रचाराय च सनातनस्य वैदिकधर्मस्य, समग्रे भारते वर्षे, यत्र विद्यमानाः यतयः स्युः निरीक्षकाः स्वस्य स्वस्य क्षेत्रेषु प्रचार्यमाणस्य धर्मस्य।

तोटकः- निर्णयः अयं भवतः अस्ति उत्तमः गुरुदेव। अनेन भारतदेशस्य भौगोलिकी सीमा सुस्थिरा कृता भविष्यति। चतुर्षु अपि मठेषु निवत्स्यन्ति चतुर्थाश्रमिणः। तेषु प्रभवत्सु भविष्यति ऐकमत्यं भारतीयानां, दार्शनिकम् आध्यात्मिकं च।

हस्तामलकः- इत्थं भविष्यति विभक्तं धर्मप्रचारकार्यम्, समग्रे अपि भारते वर्षे, येन संकल्पितं भवता सुसम्पत्स्यते। पार्थक्ये सति अपि आधिपत्यक्षेत्रस्य एकैकस्य मठस्य, परस्परम् उपकरिष्यन्ति एव सर्वे अपि इमे मठाः।

शंकराचार्यः- सत्यम्, एतत् एव अभीष्टम् अस्ति। एतत् एव श्रेयस्करम्। कामं भारतदेशीयाः अनुसरेयुः स्वां स्वां प्रादेशिकीं रीतिं परम्पराम्, मतं वा, कामं पृथक् एव स्युः सर्वेषां परिधानानि, भाषाः इष्टदेवाः च, कामं तेषु भवेद् मतभेदः भासमानः, परम एवं कृते सम्पत्स्यते तेषाम् ऐक्यम् आभ्यन्तरम्।

पद्मपादः- सम्प्रति अपि प्रवर्तितायां परीष्टौ, प्राप्स्यन्ते प्रायः द्वासप्ततिसंख्याकानि मतानि प्रसारं गतानि भारते वर्षे।

शंकराचार्यः- सत्यम् अस्ति। एषु बहुभिः वयम् संगताः स्म, अवशिष्टैः संगमिष्यामहे। सर्वे अपि इमे अस्माकम् एव बान्धवाः। बहवः हि बहुभ्यः बाह्येभ्यः कारणेभ्यः परिभ्रष्टाः सतः, सत्पथः अपि। परन्तु सम्बोध्य तान् अभिनिवेशयिष्यामहे वयम् सन्मार्गम्।

पद्मपादः- अपि श्रोष्यन्ति इमे सर्वे अस्मान्? श्रुतवन्तः अपि करिष्यन्ति किम् अस्माकं वचः?

शंकराचार्यः- अवश्यं करिष्यन्ति । न वयम् इमान् एषां मतानि वा प्रत्याख्यातुम् ईहामहे । केवलं कृत्वा कृतावधानान् तान् व्यामोहितान् बुबोधयिषामः तत्त्वम् । केवलं दिदर्शयिषामहे जनान् तत् एकं चैतन्यं, यत् अस्ति प्राणिमात्रस्य स्वरूपभूतं, अद्वितीयं सत्यम्, यम् आश्रित्य एव विविधानि दर्शनानि, मतानि, सम्प्रदायाः परम्पराः लोकस्य व्यवहाराः च प्रवर्तन्ते। वयम् इमान् अंगीचिकीर्षामः । इमान् आत्मीयान् विधित्सामः । यत् अस्ति सत्यं, यत् च अस्माकं प्रश्रयः, सद्भावः, तत् न केन अपि निराकरिष्यते ।

सुरेश्वरः- गुरुदेव, दिव्या इयं दीर्घा दृष्टिः भवतः । अलौकिकी खलु एषा । स्थिते अपि वैविध्ये अनेकत्वे, अपरिहाय इमे, एकत्वस्य प्रतिष्ठापनम् भवादृशेन एव साध्यम् । एका एव मृत् अनेकेषु मृत्पात्रेषु दृश्यते । एकम् एव सुवर्णं अनेकेषु अलंकाररूपेषु दृश्यते । सर्वेषां पात्राणां अलंकाराणां च नामानि पृथक् सन्ति, आकाराः च पृथक् सन्ति । तैः सम्पाद्यमाना क्रियापि पृथक् एव अस्ति । प्रयोजनम् अपि सर्वेषां भिन्नम् एव, तथापि तेषु अन्विता मृत् एका एव अस्ति ।

पद्मपादः- आपाततः प्रतीयमानम् इमं भेदं वास्तविकं मत्वा एव मनुष्याः सर्वे श्रेष्ठमानिनः परैः विगृह्णन्ति । वीचयः पारावारस्य किं कलहायन्ते परस्परम् आत्मनः श्रेष्ठत्वस्य सिद्धये? ह्रस्वः अपि तरंगः जलम् एव, विशालः अपि तरंगः जलम् एव । जले क्व अस्ति ज्येष्ठकनिष्ठभावः।

सुरेश्वरः- यथा सर्वेषां मृण्मयानां पात्राणां भवति मृत् उपादानम्, यथा च अलंकाराणां च सुवर्णम्, यथा वा वीचीनां भवति उपादानं पयः, तथा एव सर्वेषां देवानां, मनुष्याणां ब्रह्माण्डे स्थितानां चराणां अचराणां च सर्वेषां प्राणिनाम् अस्ति एका एव अद्वितीया चित् उपादानम्। वयं भवतः शिष्याः विधाय केन्द्रम् भवता निर्दिष्टं स्थानं, ततः बोधयिष्यामः भारतीयान् तेषाम् एकम् अद्वितीयम् अमृतं स्वरूपम् ।

तोटकः- गुरुदेव, भारतवर्षस्य चतसृषु अपि दिक्षु कस्मिन् कस्मिन् देशे अस्माभिः

मठाः क्रियन्ताम् ?

शंकराचार्यः:- प्रथमः मठः पश्चिमायां द्वारकापुर्यां गोमतीनद्याः समुद्रस्य च संगमस्थले उपद्वारकाधीशभगवन्तम् भवेत् । मठः अयं शारदामठः इति नाम्ना प्रसिद्धः भविष्यति । पूर्वस्यां जगन्नाथपुर्यां गोवर्धनमठः, उत्तरस्यां च बदरीनाथात् दक्षिणतः किञ्चिद्दूरे ज्योतिर्मठः निर्मितः भवेत् ।

हस्तामलकः:- इदं खलु महत् आश्चर्यकरम् । ईदृशेषु पूतेषु रमणीयेषु च स्थलेषु अस्माकं मठाः निर्मीयेरन् इति प्रमोदकरम् एतत् संवृत्तम् ।

शंकराचार्यः:- दक्षिणस्यां शृङ्गगिर्यां वयं करिष्यामः चतुर्थम् अस्माकं मठम् । वर्षेभ्यः पूर्वं ततः व्रजता मया दृष्टा दर्दुरशावकाः, मध्याह्ने निष्क्रम्य एकस्मात् क्षुद्रात् तडागात् रममाणाः, तान् च रममाणान् त्रायमाणः आतपात्, फणेन स्वेन एकः फणी च दृष्टः । अनुसन्दधता अवगतम् , तत्र आसीत् पूर्वं कदाचिद् ऋषेः शृंगिणः पवित्रः आश्रमः । अतः एव अत्र जीवाः जन्तवः परित्यज्य वैरं सहजं, सुखं विचरन्ति ।

सुरेश्वरः:- अद्भुतं गुरुदेव, भवते रुचितानि स्थानानि सर्वथा पवित्राणि दर्शनीयानि मनोरमाणि च सन्ति । भारतवर्षस्य चतुर्षु अपि दिक्षु स्थितैः एभिः चतुर्भिः मठैः शतं वर्षाणि यावत् गीयमाना भविष्यति सनातनधर्मस्य उज्ज्वला कीर्तिगाथा विश्वस्मिन् अपि विश्वे ।

चित्सुखः:- अपि तत्र भविष्यति किमपि प्रत्यभिज्ञानं पृथक्करणं यतीनां ब्रह्मचारिणां च मठेषु चतुर्षु अपि निवसताम् ?

शंकराचार्यः:- आम्, शृङ्गांगरिमठे, शारदामठे, गोवर्धनमठे, ज्योतिर्मठे च निवसतां ब्रह्मचारिणां नामभिः सह क्रमशः, प्रकाशः, चैतन्यः, स्वरूपः, आनन्दः च इति पदव्यः प्रयोजिताः भविष्यन्ति । एवम् एव यतयः शृङ्गगिरिमठसम्बद्धाः भविष्यन्ति सरस्वती भारती पुरी इति नामभिः प्रथिताः, शारदामठसम्बद्धाः, तीर्थाश्रमनामभ्याम्, गोवर्धनमठसम्बद्धा अरण्यवननामभ्याम्, ज्योतिर्मठसम्बद्धाश्च गिरिपर्वतसागरोपनामभिः। इत्थं भविष्यन्ति दश अभिधानानि परिव्राजकानाम् । दश अभिधानानां

यतीनां परम्परा इयं ख्याता भविष्यति दशनामी परम्परा इति नाम्ना ।

आनन्दगिरिः:- गुरुदेव, अपि तत्र भविष्यति कः अपि विशेषः मठानाम् एषां वेदेषु, मठेषु आराध्यमानेषु देवेषु च ।

शंकराचार्यः:- सत्यम् भविष्यति । श‍ृङ्गगिरिमठे आदिवाराहः, कामाक्षी च, शारदामठे सिद्धेश्वरः भद्रकाली च, गोवर्धनमठे जगन्नाथः विमला च, ज्योतिर्मठे च नारायणः पूर्णागिरिः च, भविष्यन्ति एते यथायथम् अधिदेवताः, देव्यः च एकैकस्मिन् मठे । वेदाः अपि चत्वारः इत्थं क्रमशः भविष्यन्ति मठेषु अध्येयाः । श‍ृङ्गगिरिमठे यजुर्वेदः, शारदामठे सामवेदः, गोवर्धनमठे ऋग्वेदः, ज्योतिर्मठे च अथर्ववेदः ।

पद्मपादः:- एषु चतुर्षु अपि मठेषु कीदृशः यतिः आचार्यपदे प्रतिष्ठापितः भवेत् प्रतिष्ठापितस्य तस्य कानि भविष्यन्ति कर्तव्यानि इति अस्ति कश्चन तत्र एतद् विषयकः निर्देशः?

शंकराचार्यः:- सत्यम् एव कष्टम् अस्ति मठाधिपतित्वम् । तदर्थं केनचित् अर्हेण एव भाव्यम्। अर्हतानियमान्, कर्तव्यान् च अधिपतेः मठस्य निभन्त्स्यामः महानुशासने। तत्तन्मठैः सम्बद्धाः सर्वे अपि विषयाः विवृता भविष्यन्ति तत्र एव मठाम्नायमहानुशासने ।

सदानन्दः:- इत्थं तर्हि इदं महानुशासनम् भविष्यति आदर्शम् साधारणं च मार्गदर्शकम् साधकानां परिव्राजकानां ब्रह्मचारिणां च, साक्षात्कर्तुं एकम् अद्वितीयं प्रत्यगात्मरूपं चैतन्यम्, वर्णितं यथा वेदादिसच्छास्त्रेषु ।

चिदानन्दः:- अथ च अनेन वेत्स्यन्ति साधकाः अवसरमुत्तमं जोषितुं समाजं वैदिकं धर्मम् च ।

सुरेश्वरः:- अनेन परमार्थः अयम् अपि सेत्स्यति यत् मठाः सम्पत्स्यन्ते उत्तमं स्थानम् संहन्तुं साधकानां वनेषु स्वतन्त्रतया विचरताम् । ते प्रभविष्यन्ति प्राप्तुम् अन्योन्यस्य साहाय्यं साधनाविषयकम्, शक्ष्यन्ति च अन्योन्यस्मै दातुं तत् । भारतीयायाः संस्कृतेः धर्मस्य च रक्षायै संगताः ते समर्थाः भविष्यन्ति विचार्य विमृश्य च यथोचितं निर्णेतुम्।

चित्सुखः- मठाम्नायेन एव प्राप्स्यन्ति साधकाः, आत्मनः असाधारणं प्रत्यभिज्ञानम् अपि।

शंकराचार्यः- पुरातनात् कालात् भारतवर्षम् इदं शास्यमानम् अस्ति धर्मगुरुभिः अनुशासितैः राजभिः । अयोध्यापतेः दशरथस्य राज्ञः गुरुः ऋषिः वसिष्ठः आसीत् । मिथिलानरेशस्य जनकस्य गुरुः शतानंदः ऋषिः आसीत् । पाण्डवैः स्वयमेव जगद्गुरोः श्रीकृष्णस्य अनुशासनम् अंगीकृतम् । इत्थम् अत्र सर्वदा एव धर्मनीत्या राजनीतिः अनुशासिता अभवत् ।

चिदानन्दः- तथैव इदानीम् अपि आचार्याः चतुर्षु मठेषु अधिष्ठिताः, धुनानाः ध्वजं धर्मस्य सनातनस्य, समग्रे अपि भारतवर्षे, करिष्यन्ति धर्मानुशासनम्, येन अनुशासिताः भविष्यन्ति एतत्देशीयाः नेतारः, तेषां नीतयः च ।

शंकराचार्यः- एतदेव उत्तमम् । एतत् एव इष्टम् । एतत् एव हितावहम् । सनातनधर्मस्य एव आचरणेन मानवानां भवति कल्याणम् । न अयं सनातनः धर्मः केन अपि विशिष्टेन प्रवर्तितः कस्मिंश्चिद् विशिष्टे समये। धर्मः अयं सनातनः, शाश्वतः, नित्यः । ईश्वरः अपि अस्ति केवलम् अस्य उपदेष्टा । काले काले कालप्रभावाद् ग्लायति अस्मिन् धर्मे कदाचित् अवतीर्णेन स्वयम् ईश्वरेण, कदाचित् तस्य स्वरूपभूतैः सद्भिः अयं पुनः अपि प्रतिष्ठापितः भवति ।

सुरेश्वरः- गुरुदेव, मननीया इयं चर्चा अद्यतनी । यत् अद्वैतं, न तत् सर्वत्यागेन सम्भवति, प्रत्युत समावेश्य सर्वं सम्भवति । विहाय सेवां न किमपि साध्यते, सेवया सर्वं साध्यते । अनादृत्य इतरान् देवान् इष्टः देवः न पूज्यते, इतरान् देवान् आद्रियमाणेन् एव इष्टः देवः पूजितो भवति । इदम् अस्ति दर्शनम् उत्तमात् उत्तमम्।

पद्मपादः- गुरुदेव, कांस्कान् चतुरः आचार्यान् प्रतिष्ठापयिष्यति भवान् एषु चतुर्षु पीठेषु?

शंकराचार्यः- सुरेश्वराचार्यः भविष्यति प्रथमः आचार्यः द्वारकाशारदामठस्य । हस्तामलकः शृङ्गगिरिमठस्य, पद्मपादः गोवर्धनमठस्य, तोटकः च ज्योतिर्मठस्य ।

चत्वारः अपि इमे सन्ति मम सत्तमाः शिष्याः । चतुरः मठान् अधिष्ठितैः एभिः धृता स्थास्यति देदीप्यमाना ज्योतिः धर्मस्य सनातनस्य ।

(नेपथ्ये)

पुमर्थाश्चत्वारः किमुत निगमा ऋक्प्रभृतयः
प्रभेदा वा मुक्तेर्विमलतरसालोक्यमुखराः ।
मुखान्याहो धातुश्चिरमिति विमृश्याथ विबुधा
विदुः शिष्यान्हस्तामलकमुखराञ्शङ्करगुरोः ।

(प्रविशति राजा सुधन्वा)

सुधन्वा- प्रणमामि आचार्यदेव । सम्प्रति भवान् दिग्विजयाय प्रस्थातुकामः अस्ति इति विदित्वा आगतः अस्मि अहम् । भवता अनुज्ञायेय चेत् अहं अनुयायाम् दिग्विजययात्रायाम् अस्याम् ?

शंकराचार्यः- अवश्यमेव राजन्, भवान् अस्यां दिग्विजययात्रायाम् अनुयातु माम् । इदानीम् एव सशिष्याः यात्रायै प्रतिष्ठामहे ।

शिष्याः- भगवत्पादशङ्कराचार्याः विजयन्ते सनातनः वैदिकधर्मः विजयते ।

शिष्याः- जय जय शंकर । हर हर शंकर (प्रवर्तते घोषः)

(सर्वे प्रतिष्ठन्ते)

****

## ( स्थानम् - रामेश्वरम्, अनंतरायः, बाह्लिकप्रदेशः )

(पात्राणि – गुरुः, जिज्ञासुः, मुमुक्षुः, शंकराचार्यः, शिष्याः,
राजा सुधन्वा, शाक्ताः, सारस्वता, वैष्णवाः च)

प्रवेशकः

(गुरुः शिष्यः च प्रविशतः)

जिज्ञासुः- कालडी ग्रामस्य परित्यागात् पूर्वं बालः शङ्करः नद्याः प्रवाहस्य परिवर्तनेन मातरम् असेवत, अन्त्येष्ट्या च तस्याः निर्वर्तनेन तस्याः अभीष्टं समसाधयत्।

मुमुक्षुः- पितुः अपि आसीत् किम् अपि अभीष्टम् – पुत्रं कर्तुम् सर्वज्ञम् । किं

तत् अपि समसाधयत् शङ्कराचार्यः?

गुरुः- आम्, तत् इदानीम् एव द्रक्ष्यामः वयम् ।

जिज्ञासुः- अन्यस्य अपि कस्यचित् इष्टं समसाधयत् आचार्यदेवः गुरुदेव ?

गुरुः- आम्, गृहत्यागात् पूर्वमेव बालेन शङ्करेण भगवतः श्रीकृष्णस्य इष्टं संसाधितम् आसीत् ।

मुमुक्षुः जिज्ञासुश्च- तत् कथं गुरुदेव?

गुरुः- बालशङ्करस्य उपगृहम् एव आसीत् श्रीकृष्णमन्दिरम् । शङ्करस्य प्रार्थनया परिवर्तितप्रवाहा नदी शङ्करगृहस्य समक्षम् स्यन्दितुं प्रवृत्ता। तेन नद्याः जलं श्रीकृष्णमन्दिरं प्रवेष्टुं प्रावर्तत ।

मुमुक्षुः- तदा इष्टम् भगवता श्रीकृष्णेन?

गुरुः- सत्यम्, आत्मनः स्थानपरिवर्तनं कर्तुं श्रीकृष्णः अशरीरगिरा शंकरम् उक्तवान्।

जिज्ञासुः- भगवान् स्वयम् उक्तवान् ?

गुरुः- अथ किम्, भगवान् स्वयम् उक्तवान् । तदा एव बालः शङ्करः उन्नीय भगवतः चलां मूर्तिम् स्वकरेण सुरक्षिते स्थाने प्रत्यतिष्ठिपत् ।

मुमुक्षुः- तथा च इत्थं भगवतः अपि इष्टं कृतम् ।

जिज्ञासुः- इतः अपि अवशिष्टम् किम् अपि इष्टसाधनम् ?

गुरुः- अवशिष्टम्, गुरोः आत्मनः इष्टम्, तत् साधयितुं दिशः जेतुं निर्गतः आचार्यदेवः !

(गुरुः शिष्यः च निर्गच्छतः)

****

## दृश्यम् -२

(शिष्यैः सह आगच्छता शङ्कराचार्येण शक्तेः उपासकाः संगच्छन्ते)

शाक्तः-१ स्वामिन् वयं स्मः शक्तेः उपासकाः, परितः रामेश्वरं निवासिनः प्रणमामः भवन्तम् ।

शंकराचार्यः- नारायण, नारायण, नारायण ।

शाक्तः-२ अस्माकं मतम् उत्तमं, चित्तपावनं च । भगवतः शङ्करस्य आद्याशक्तिः एव अस्ति उत्पादयित्री सर्वकार्याणाम् । तस्याः मायाशक्त्याः निर्गुणायाः वशंगतं जगत् प्रवर्तते । अगम्या सा आद्याशक्तिः वाचा । वयम् इह सेवामहे आद्यशक्तेः अंशरूपायाः भवान्याः चरणकमले, येन वयं जीवन्मुक्ताः स्याम ।

शंकराचार्यः- सत्यम् अभिहितं त्वया । तथापि ऋते ज्ञानात् न मुक्तिः इति अस्ति शास्त्रस्य वचनम्। ज्ञानम् अत्र आत्मनः, न अन्यस्य कस्यचित् । अतः आत्मवित् मुच्यते न अन्यः इति एवंविधानि अन्यानि अपि वाक्यानि शास्त्रेषु उपलभ्यन्ते ।

शाक्तः-३ यः हि आद्यां देवीं, विद्याविद्यारूपां शक्तिं सेवते, सः अविद्या रूपं मृत्युं तीर्त्वा, विद्यारूपं मोक्षम् अश्नुते । प्रकृतिपुरुषयोः न अस्ति पृथग्भावः । अतः मुमुक्षुभिः आराधनीया आद्यादेवी ।

शंकराचार्यः- अजा इत्यादि मन्त्रैः निरूप्य मायायाः स्वरूपं, ततः मुक्तेः रूपं पारमेश्वरं तत्त्वं वर्णितम् । सांख्यमते प्रकृतेः परस्य अविकृतस्य सुखात्मनः परमेश्वरस्य बोधात् मुक्तिः मता । ब्रह्मवित् ब्रह्म एव न अन्यः इत्यपि श्रुतिः । अतः त्वया ब्रह्मविदा भाव्यम् ।

शाक्तः- यथा अकारादयः वर्णाः प्रणवप्रभवाः, तथैव लक्ष्मीभवान्यादिदेव्यः अपि आद्यशक्तिप्रभवाः सन्ति । अतः एव अस्माभिः इव भवता अपि बिभ्रता चिह्नानि रुद्रशक्तेः भवान्याः, सेव्या परमेश्वरी आद्यादेवी, सर्वस्य मुक्तिप्रदा सर्वजननी।

शंकराचार्यः- भवता या द्वैतवेदयित्री विद्यास्वरूपिणी भवानी वर्णिता तस्याः सेवया चित्तं शुध्यति, मुक्तिः न भवति । अतः विहाय चिह्नानि कुंकुमत्रिपुण्ड्रहैम पादुकादीनि रोचयामः अद्वैतविद्याम् । भवद्भिः अपि सेव्यताम् इयं अद्वैतविद्या, अहं ब्रह्म इति स्वरूपिणी । अनेन एव मोक्ष्यन्ते भवन्तः, न अन्यथा ।

शाक्ता:- यतिवर, स्वीकुर्मः वयम् भवता उपदिष्टम् ।

(शाक्तानां प्रस्थानात् पूर्वमेव प्राप्नुवन्ति तत्र सारस्वताः उपासकाः)

सारस्वतोपासकः- हे स्वामिन्, वयं स्मः सरस्वत्याः उपासकाः । वेदः नित्यः, अतः सरस्वती अपि नित्या । सा एव जगतः कर्त्री । सा एव आत्मा । सा एव ब्रह्मरूपिणी, मोक्षप्रदायिनी । अतः वयम् इव भवान् अपि उपासीत सरस्वतीम्।

शंकराचार्यः- विप्राः, कंठताल्वादिस्थानेभ्यः जायमानः वेदः कथं नित्यः भवेत् ? परमात्मनः निःश्वासभूतः वेदः उदपद्यत इति श्रुतिः वर्णयति । यत् च अस्ति जन्यं तत् अनित्यम् इति प्रमापकानि सन्ति बहूनिं प्रमाणानि । जगति उत्पद्यमाने सूर्यः एव वेदम् उदपादयत् । युगावसाने च प्रलयं गच्छति जगति वेदः अपि यास्यति प्रलयम् । इत्थं सूर्यसिद्धान्ते प्रतिपादिते वेदजन्यत्वे, कथं सरस्वती नित्या भवेत् ? अथ च यदि सरस्वती नित्या, किं कारणं ब्रह्मा तपः अतप्यत? ब्रह्मा अपि आद्यजीवत्वात् अनित्यः एव । तन्मुखवासिनी सरस्वती अपि अनित्या एव इति अत्र न अस्ति संशयः ।

सारस्वतोपासकाः- वेदार्थस्य ज्ञानेन रहितः पुरुषः न वेत्ति सारस्वतं स्वरूपम् उत्तमम्- "नावेदविन्मनुते तं बृहन्तमिति" श्रुतेः । अतः ब्राह्मणैः वेदार्थस्य अनुसन्धानपूर्वकम् एव सरस्वत्स्याः स्वरूपस्य अनुसन्धानं कर्तव्यम्।

शंकराचार्यः- यत् स्वरूपम् अस्ति वागादिभिः अवर्णनीयम् यः च अस्ति समर्थः परमात्मरूपः, आदिरूपः, तस्य ईश्वरस्य बोधाय साधनानि भवन्ति आवश्यकानि, परन्तु मुक्तये अद्वैतबोधः भवति आवश्यकः । अतः भवन्तः अनुसरन्तु अद्वैतमार्गम्।

सारस्वतोपासकाः- तर्हि किं वयं त्यजेम स्नानादिकर्म, देव्याः सरस्वत्याः उपासनां च?

शंकराचार्यः- त्यागः नास्ति आवश्यकः । सर्वाणि कर्माणि उपासनाः च ईश्वरार्पणबुद्ध्या एव अनुतिष्ठन्तु भवन्तः । अस्माभिः वर्णितां पञ्चदेवपूजां स्वीकुर्वन्तु । मध्ये देवीं परितः च अन्यदेवान् संस्थाप्य सर्वान्

देवान् सादरं पूजयन्तु । एवं कृते पूर्वस्मिन् जन्मनि कृतानि पापानि अपनीतानि भविष्यन्ति, अन्ते च गुरुमुखाद् महावाक्यस्य श्रवणेन भविष्यति आत्मनः आनन्दघनत्वस्य बोधः । ततः एव मुक्तिः, न अन्यथा मुक्तिः सम्भवति ।

सारस्वतोपासकाः- आचार्यदेव, प्रणम्य भवतः चरणौ स्वीकुर्मः वयं भवता उपदिष्टम् अद्वैतमार्गम् ।

(सारस्वतोपासकाः अपयन्ति, आयान्ति च वैष्णवाः)

वैष्णवाः- हे स्वामिन्, अनन्तराय निवासी अहं वैष्णवमतम् आस्थितः अस्मि । यत्फलं सर्ववेदपाठेन सर्वतीर्थयात्रया च लभ्यते तत्फलं भगवतः जनार्दनस्य स्तुत्या लभ्यते इति अस्ति अस्माकं शास्त्रीयं मतम् । मतम् एतम् अनुसरन्तः वयं बिभृमः शंखचक्रादीनि भगवतः चिह्नानि। कण्ठे तुलसिकां, भाले च ऊर्ध्वपुंड्रं कुर्मः, येन मुक्तिः अस्माकं करतले एव तिष्ठति ।

शंकराचार्यः- हे मूढ़मते, चक्रादिचिह्नानाम् धारणेन मोक्षः न सिद्ध्यति । भवान् विष्णुम् आश्रयेत्, कृतानां कर्मणां फलं ईश्वराय अर्पयेत् । ततः कर्मबन्धने अपगते शुद्धचित्तः गुरुं कंचन बुद्धाद्वैतसतत्वम् आश्रयेत । गुरूपसत्त्या लब्धोपदेशः भवान् भविष्यति मुक्तः । न अन्यः पन्थाः विद्यतेऽयनायेति वेदः एव वेदयति।

वैष्णवः- हे भगवन्, अनेकेषु जन्मसु कृतानाम् पुण्यकर्मणां फलम् इदं यद् भवतः चरणौ मम दृष्टिपथम् उपगतौ स्तः । कृतार्थं मां करोतु ।

शंकराचार्यः- हे विप्रदेव, फ़लेच्छारहितेन भवता कर्म कर्तव्यम् । तेन चित्तस्य शुद्धिः, मनसः समाधिश्च सम्पत्स्यते । ततः अहं ब्रह्मास्मि इति भावयन् दृढज्ञानः भवान् भविष्यति मुक्तः ।

द्वितीय वैष्णवः-नमो नारायणाय । शार्ङ्गपाणिनामा वैष्णवः अहम् । विष्णोः शंखचक्रादीनि चिह्नानि बिभ्राणः, त्रीन् लोकान् पुनानः नरः निवसति वैकुंठे लोके इति पुराणेषु बहुधा प्रतिपादितम् अस्ति, अतः एव अहं

बिभर्मि एतानि चिह्नानि, अतः एव च अहं उत्तमः वैष्णवः मुक्तः संसारबन्धनात् गमिष्यामि वैकुंठम् ।

शंकराचार्यः- ये तप्तमुद्राः न धारयन्ति, ते न मुच्यन्ते इति कुत्र अपि न उक्तम् अस्ति श्रुतिषु । प्रत्युत यः ब्रह्म वेद सः एव मुच्यते इति अस्ति श्रुतिः । अथ च तप्तमुद्रायाः धारणम् निषिद्धम् बृहन्नारदीयपुराणे । तप्तमुद्राभरणेन अहं भविष्यामि भगवता समः इति भवतः भावः दरिद्रस्य "राजास्मि संवृत्त" इतिवत् मनोराज्यम् एव । शिखी यज्ञोपवीती ब्रह्मात्मैकत्वविद्याप्रतिपन्नो द्विजः भवति मुक्तः इति वदन्ति वेदाः ।

वैष्णवः- हे स्वामिन्, कृतार्थः अस्मि संवृत्तः अनेन भवता उपदिष्टेन । अतः परम् अहं एकस्मिन् अद्वितीये ब्रह्मणि एव वर्तिष्ये ।

(साष्टाङ्गं प्रणमति)

शंकराचार्यः- मुक्तः भव ।

(शङ्कराचार्यः अन्ये च सर्वे निर्गच्छन्ति)

****

प्रवेशकः

(गुरुः शिष्यः च प्रविशतः)

मुमुक्षुः जिज्ञासुश्च- प्रणमावः गुरुदेव ।

गुरुः- कल्याणमस्तु वत्सौ ।

मुमुक्षुः- गुरुदेव, कः तत्र दोषः, देवदेवीपूजने? न अवगतं भवति शङ्कराचार्यस्य तात्पर्यम् ।

गुरुः- सोम्य, अनर्थाः सर्वे अपि अविचारप्रभवाः । अविचारः अत्र न अस्ति विचारस्य अभावः; प्रत्युत विपरीतः विचारः । मनुष्यः, यथा विचारः कर्तव्यः, न तथा करोति, यथा न कर्तव्यः तथैव करोति । कथं विचारः कर्तव्यः इति विचारस्य अपि पद्धतिः विद्यते निश्चिता । तां विहाय कृतः विचारः विपरीतः विचारः न लक्ष्यं प्रापयति, अलक्ष्यम् एव नयति । सः एव विपरीतः विचारः पुनः पुनः अभ्यस्तः सत्यः

इव भासते । अहं दुःखी, विषयभोगः माम् सुखिनं करिष्यति । देवानां देवीनां च पूजया विषयभोगः प्राप्स्यते, ईदृशः विचारः एव अस्ति विपरीतः ।

जिज्ञासुः- यदि ईदृशः विचारः प्रतिकूलः, तर्हि अनुकूलः कीदृशः भवेत्?

गुरुः- अहं देवं पूजयामि, व्युदसितुं रागद्वेषौ, संचितौः अन्तःकरणे भुक्तपूर्वेभ्यः विषयेभ्यः, न तु विषयेभ्यः अवाप्तुं सुखम् । हे प्रभो विनीयताम् इयम् अन्तरा अशुद्धिः मदीया, येन अहं स्याम् समर्थः साक्षात्-कर्तुम् आत्मानम् । ईदृशः विचारः भवति अनुकूलः यथार्थः च ।

मुमुक्षुः- तर्हि यद् वा यथा वा वयं व्यवहरामः तत्र केन विशेषेण भाव्यम् ?

गुरुः- यत् किम् अपि कर्तव्यम्, ईश्वरं प्रसादयितुम् एव कर्तव्यम्, न तु आत्मनः इन्द्रियाणि अहंकारं वा प्रसादयितुम् । किं कर्तव्यम्, कश्च देवः पूजनीयः, कीदृशं वासः वसनीयम् कीदृशेन वा चिह्नेन शरीरम् अंकनीयम्, सर्वम् एतत् न मोक्षकारणम् भवति । परन्तु सर्वेण एतेन अनुष्ठीयमानेन सह या ईश्वरार्पणबुद्धिः भवति, सा भवति मोक्षकारणम् ।

जिज्ञासुः- गुरुदेव, कः अपि ईदृशः ईश्वरबुद्धिः सम्प्रति परितः अस्मान् न दृश्यते। धार्मिकाणां आध्यात्मिकानां वा अपि सर्वे व्यवहाराः वस्त्रचिह्नप्रयोजनाः एव संवृत्ताः दृश्यन्ते ।

मुमुक्षुः- न एतावत् एव, इदं वस्त्रम्, इदं चिह्नम् स्वैः परैः च अपि विग्रहस्य निमित्तं सम्पद्यमानम् अवलोक्यते ।

गुरुः- सर्वम् इदं वस्त्रादिकं प्रदर्शनमात्रम्, न तु वस्तुतः कस्यचित् अर्थस्य साधकम् । अत एव इदं सर्वम् पाखंडः इति उच्यते । सनातनस्य वैदिकस्य धर्मस्य न भवति चित्तम् इव शरीरं साधकम् । भावप्रधानः अयं धर्मः। भावे कलुषिते धर्मः एव अधर्मः सम्पद्यते । भावे च शुद्धे क्वचित् अधर्मः अपि धर्मः एव भवति, तानि एव भावोपहतानि कल्कः इति वचनात् । अतः देवपूजनादीनि भावशुद्धिपर्यवसानानि एव भवन्ति साधनानि, न तु स्वयं साध्यानि ।

मुमुक्षुः- अतएव भगवता शङ्कराचार्येण पञ्चायतनपूजनं प्रतिपादितम् ।

गुरुः- सत्यम्, वैदिकी संस्कृतिः अस्माकीना सत्कृतिमूला, न तु तिरस्कृतिमूला।

मुमुक्षुः- अस्माकम् आचार्यदेवः ननु इदम् एव तत्त्वम् सर्वान् बोधयति शास्त्रार्थेन। अपि एतत् सत्यम् ?

जिज्ञासुः- आचार्यदेवः निर्दिशति दक्षिणां पद्धतिम् , अपवर्गस्य शाश्वतसुख-रूपस्य ।

गुरुः- देव्याः उपासकानां वैष्णवानां च पश्चात् मालवादेशस्य प्रसिद्धान् बाणमयूर-दण्डीसदृशान् विदुषः पराजित्य आचार्यदेवः आगच्छत् बाह्लिकं प्रदेशम्। अत्र, जैनविद्वांसः आगच्छन् आचार्यदेवेन शास्त्रार्थं कर्तुम् ।

(गुरुः शिष्यश्च निर्गच्छतः)

****

## दृश्यम् - ३

(अवैदिकैः विद्वद्भिः शङ्कराचार्यः मिलति)

जैनः- आचार्य, जैनं मतम् मम मतम् । जिनदेवः एव सर्वेभ्यः मनुष्येभ्यः मुक्तिं यच्छति इति अस्ति जैनं मतम् । देवः असौ प्राणिनां हृदि जीवात्मरूपेण वसति । असौ जीवात्मरूपः देवः स्वज्ञानातिशयात् मुच्यते शरीरमृत्योः । जीवः अस्ति सर्वदा शुद्धः । शरीरम् इदं मलपिण्डम् । स्नानादिना कथम् अपि शोधयितुम् अशक्यम् । अतः स्नानानादीनि मिथ्याकर्माणि न आचरणीयानि ।

शंकराचार्यः- हे पण्डित, न एतत् सत्यम् । स्थूलसूक्ष्मकारणानि इति त्रीणि शरीराणि भवन्ति जीवस्य । त्रिषु अपि एतेषु शरीरेषु जीवस्य यत् तादात्म्यम्, तस्मात् मुक्तः जीवः सच्चिदानन्दरूपः भवति । अहम् अस्मि ईश्वराद् भिन्नः इत्याकारिका बुद्धिः अविद्या । अतः केवलस्य शरीरस्य नाशात् जननमरणाभ्याम् अपि मुक्तिः भविष्यति इति नास्ति संभवम् ।

जैनः- आचार्यदेव, स्वशिष्यैः सह स्वीकरोमि भवतः अद्वैतमतम् ।

(बाह्लिकप्रदेशे मिलन्ति अन्ये अपि विद्वांसः)

जैन विद्वान्- भो संन्यासिन्, किं कारणं जैनमतम् भवतः मतम् न भवति? अत्र यादृशः विचारः कृतः दृश्यते, न कुत्र अपि अस्ति तादृशः । सुविचारितानि सन्ति अत्र तत्त्वानि ।

शंकराचार्यः- यदि एवम् तर्हि वदतु जीवस्य स्वरूपविषये किं जैनमतम् ?

जैनः- यत्परिमाणं शरीरम्, तत्परिमाणः जीवः ।

शंकराचार्यः- जीवे शरीरपरिमाणे शरीरस्य इव जीवस्य अपि अनित्यत्वं प्रसज्येत। किं जीवः अनित्यः इति अस्ति जैनमतम् ? किञ्च हस्तिनः जीवात् मनुष्यस्य जीवः अस्ति अत्यल्पपरिमाणः, सः एव मशकस्य जीवात् अस्ति महत्तमपरिमाणः। इदानीं विचारयतु, मनुष्यस्य जीवः यदि हस्तिनः शरीरं प्रविशेत् मशकस्य शरीरं वा प्रविशेत् ततः किं स्यात्? हस्तिनः शरीरस्य मनुष्यस्य शरीरेण परिमितः भागः एव जीवेन आविष्टः स्यात्, अवशिष्टः भागः जीवेन रहितः एव तिष्ठेत् । एवम् एव मशकस्य शरीरस्य अपि अल्पीयस्त्वात् मनुष्यस्य शरीरात् न मनुष्यशरीरी जीवः मशकस्य शरीरे प्रवेष्टुं शक्नुयात् ।

जैनः- न एषः दोषः, महति शरीरे लब्धे नूतनानाम् एव अवयवानां प्राप्तेः, लघुनि शरीरे च लब्धे अवयवानां ह्रस्वत्वं ऊनत्वं वा गतत्वात् । अनेन यावत्शरीरपरिमाणः एव तिष्ठति जीवः, न च दुष्यति अस्माकं सिद्धान्तः। समो नागेन समो मशकेन इति श्रुतिः अपि जीवं हस्तिनः शरीरे हस्तिसमं, मशकस्य शरीरे मशकसमं वर्णयति ।

शंकराचार्यः- अवयवानां आगमापायित्वात् शरीरम् इव एभिः जीवपृथक्भूतैः एव भाव्यम्। पृथग्भूतेषु एतेषु कथं उपपद्येयाताम् जीवस्य वृद्धिह्रासभावौ? शरीरप्रविष्टे जीवे प्रादुर्भवन्ति अवयवाः पंचभूतेभ्यः, निष्क्रान्ते च शरीरात् विलीयन्ते पञ्चभूतेषु इति अपि न युज्यते, जीवस्य अविकारत्वात्। न अस्ति जीवः पञ्चभूतानां विकारः ।

जैनः- अवयवाः इमे नित्याः, यतः सन्ति जननमरणरहिताः, तथापि

मुमुक्षुः- अतएव भगवता शङ्कराचार्येण पञ्चायतनपूजनं प्रतिपादितम् ।

गुरुः- सत्यम्, वैदिकी संस्कृतिः अस्माकीना सत्कृतिमूला, न तु तिरस्कृतिमूला।

मुमुक्षुः- अस्माकम् आचार्यदेवः ननु इदम् एव तत्त्वम् सर्वान् बोधयति शास्त्रार्थेन। अपि एतत् सत्यम् ?

जिज्ञासुः- आचार्यदेवः निर्दिशति दक्षिणां पद्धतिम् , अपवर्गस्य शाश्वतसुख-रूपस्य ।

गुरुः- देव्याः उपासकानां वैष्णवानां च पश्चात् मालवादेशस्य प्रसिद्धान् बाणमयूर-दण्डीसदृशान् विदुषः पराजित्य आचार्यदेवः आगच्छत् बाह्लिकं प्रदेशम्। अत्र, जैनविद्वांसः आगच्छन् आचार्यदेवेन शास्त्रार्थं कर्तुम् ।

(गुरुः शिष्यश्च निर्गच्छतः)

****

## दृश्यम् - ३

(अवैदिकैः विद्वद्भिः शङ्कराचार्यः मिलति)

जैनः- आचार्य, जैनं मतम् मम मतम् । जिनदेवः एव सर्वेभ्यः मनुष्येभ्यः मुक्तिं यच्छति इति अस्ति जैनं मतम् । देवः असौ प्राणिनां हृदि जीवात्मरूपेण वसति । असौ जीवात्मरूपः देवः स्वज्ञानातिशयात् मुच्यते शरीरमृत्योः । जीवः अस्ति सर्वदा शुद्धः । शरीरम् इदं मलपिण्डम् । स्नानादिना कथम् अपि शोधयितुम् अशक्यम् । अतः स्नानानादीनि मिथ्याकर्माणि न आचरणीयानि ।

शंकराचार्यः- हे पण्डित, न एतत् सत्यम् । स्थूलसूक्ष्मकारणानि इति त्रीणि शरीराणि भवन्ति जीवस्य । त्रिषु अपि एतेषु शरीरेषु जीवस्य यत् तादात्म्यम्, तस्मात् मुक्तः जीवः सच्चिदानन्दरूपः भवति । अहम् अस्मि ईश्वराद् भिन्नः इत्याकारिका बुद्धिः अविद्या । अतः केवलस्य शरीरस्य नाशात् जननमरणाभ्याम् अपि मुक्तिः भविष्यति इति नास्ति संभवम् ।

जैनः- आचार्यदेव, स्वशिष्यैः सह स्वीकरोमि भवतः अद्वैतमतम् ।

(बाह्लिकप्रदेशे मिलन्ति अन्ये अपि विद्वांसः)

जैन विद्वान्- भो संन्यासिन्, किं कारणं जैनमतम् भवतः मतम् न भवति? अत्र यादृशः विचारः कृतः दृश्यते, न कुत्र अपि अस्ति तादृशः । सुविचारितानि सन्ति अत्र तत्त्वानि ।

शंकराचार्यः- यदि एवम् तर्हि वदतु जीवस्य स्वरूपविषये किं जैनमतम् ?

जैनः- यत्परिमाणं शरीरम्, तत्परिमाणः जीवः ।

शंकराचार्यः- जीवे शरीरपरिमाणे शरीरस्य इव जीवस्य अपि अनित्यत्वं प्रसज्येत। किं जीवः अनित्यः इति अस्ति जैनमतम् ? किञ्च हस्तिनः जीवात् मनुष्यस्य जीवः अस्ति अत्यल्पपरिमाणः, सः एव मशकस्य जीवात् अस्ति महत्तमपरिमाणः। इदानीं विचारयतु, मनुष्यस्य जीवः यदि हस्तिनः शरीरं प्रविशेत् मशकस्य शरीरं वा प्रविशेत् ततः किं स्यात्? हस्तिनः शरीरस्य मनुष्यस्य शरीरेण परिमितः भागः एव जीवेन आविष्टः स्यात्, अवशिष्टः भागः जीवेन रहितः एव तिष्ठेत् । एवम् एव मशकस्य शरीरस्य अपि अल्पीयस्त्वात् मनुष्यस्य शरीरात् न मनुष्यशरीरी जीवः मशकस्य शरीरे प्रवेष्टुं शक्नुयात् ।

जैनः- न एषः दोषः, महति शरीरे लब्धे नूतनानाम् एव अवयवानां प्राप्तेः, लघुनि शरीरे च लब्धे अवयवानां ह्रस्वत्वं ऊनत्वं वा गतत्वात् । अनेन यावत्शरीरपरिमाणः एव तिष्ठति जीवः, न च दुष्यति अस्माकं सिद्धान्तः। समो नागेन समो मशकेन इति श्रुतिः अपि जीवं हस्तिनः शरीरे हस्तिसमं, मशकस्य शरीरे मशकसमं वर्णयति ।

शंकराचार्यः- अवयवानां आगमापायित्वात् शरीरम् इव एभिः जीवपृथक्भूतैः एव भाव्यम्। पृथग्भूतेषु एतेषु कथं उपपद्येयाताम् जीवस्य वृद्धिह्रासभावौ? शरीरप्रविष्टे जीवे प्रादुर्भवन्ति अवयवाः पंचभूतेभ्यः, निष्क्रान्ते च शरीरात् विलीयन्ते पञ्चभूतेषु इति अपि न युज्यते, जीवस्य अविकारत्वात्। न अस्ति जीवः पञ्चभूतानां विकारः ।

जैनः- अवयवाः इमे नित्याः, यतः सन्ति जननमरणरहिताः, तथापि

आगमापायिनः । अतएव कैश्चित् एव अवयवैः वृद्धः जीवः व्याप्नोति हस्त्यादीनां महत् शरीरम्, कैश्चित् अन्यैः च ऊनः मशकादीनाम् अल्पानि शरीराणि अश्नोति। अतः युक्तः अयम् अस्माकं सिद्धान्तः।

शंकराचार्यः- अवयवाः इमे चेतनाः अचेतनाः, वा? चेतनाः चेत् भिन्नरुचित्वात् तेषां ऐकमत्यस्य असंभवात् कस्मिंश्चित् एकस्मिन् अपि चेतने असंगते शरीरे वैकृतम् आपद्येत । अचेतनाः चेत् अचेतनैः तैः संहतैः अपि शरीरं जडं चैतन्यं कर्तुम् अशक्यत्वात् न युक्तः युष्माकं सिद्धान्तः ।

जैनः- हे विद्वन् - यथा अश्वैः अनेकैः अपि सम्मतैः रथः एकः उह्यते, तथैव अवयवाः बहवः अपि एकचित्तीभूय प्रवर्तयन्ति वपुः इदम् इत्यत्र न दृश्यते कः अपि विरोधः।

शंकराचार्यः- हे सुमते, रथे भवन्ति अश्वाः बहवः, परन्तु तत्र तिष्ठति एकः सारथिः तेषां नियन्ता । तस्य प्रभावात् तेषु ऐकमत्यं भवति, न तु स्वतः । परन्तु न अस्ति अत्र शरीरे कश्चन नियामकः भवतः मतः । तत्कथं अवयवेषु ऐकमत्यं सम्भवेत् ?

जैनः- अवयवाः जीवानाम् भवन्ति आगमापायिनः, ते बृहति शरीरे बृंहन्ति, लघुनि च संकुचन्ति जलूकावत् । यथा पीतरक्ता जलूका शूना भवति च्यावितास्रा सैव भवति शाता, तद्वद् जीवः अपि ।

शंकराचार्यः- इत्थम् अवयवानां संकोचविकासशीलत्वे अभ्युपगते तेषां विकारित्वं प्रसज्येत, विकारित्वे च नश्वरत्वं सिद्ध्येत् । अवयवानां नश्वरत्वे सिद्धे जीवः अपि नश्वरः सिद्धः भवेत् । ततः च कृतनाशाकृताभ्यागम-दोषस्य प्रसक्तिः । जीवे मृते नष्टे तत्कृतानां कर्मणाम् अनुत्पादित-फलानामेव नाशः, उत्पन्नेन जीवेन अकृतकर्मणाम् एव फलप्राप्तिः, इत्थं दोषद्वयं प्रसक्तं भवेत् । अपि च, अन्यः अपि अयं दोषः प्रसज्ज्येत-तुम्बीफलम् इव जीवः अष्टविधानाम् कर्मणां भारेण पीडितः संसारसमुद्रे मज्जति अपेतभारस्तु तुम्बीफलम् इव उन्मज्जति । जैनराद्धान्ते इदम् उन्मज्जनम् एव मोक्षः । तत्र आगमापायशीलानाम्

अवयवानां कतमः मुक्तः भवेत्, कतमः बद्धः तिष्ठेत् इति निर्णयः कथं भवेत् ?

किञ्च यः अयं भवतः सप्तभंगीनयः, सः अपि अस्ति अयुक्तः परस्परं विरुद्धानां पदार्थधर्माणां एकस्मिन् एव पदार्थे एककालावच्छेदेन स्थितेः असंभवात्। सत्त्वं च असत्त्वं च एकत्वं च अनेकत्वं च कथम् एककालावच्छेदेन एकत्र स्याताम्?

जैनिनः:- आसाम् भवतः युक्तीनां न अस्ति अस्मासु किमपि उत्तरम्। अतः वयम् अङ्गीकृत्य अस्माकं पराजयं, सादरं स्वीकुर्मः अद्वैतमतं भवता प्रतिपादितम्।

(साष्टाङ्गं प्रणमन्ति)

शंकराचार्यस्य शिष्याः:- भगवत्पादशंकराचार्यस्य जयः अस्तु, सनातनस्य वैदिक-धर्मस्य जयः अस्तु।

(इमे साधयन्ति, अन्ये अवैदिकाः विद्वांसः आगच्छन्ति)

बौद्धः:- यते, अहम् अस्मि योगाचारबौद्धः। भवान् मया सह शास्त्रार्थं करोतु। आत्मानात्मानौ यदि द्वौ पदार्थौ स्याताम्, तौ विवेचितौ अपि स्याताम्। ननु एतत् एव न अस्ति। पदार्थद्वयस्य अपि असत्त्वात्। दृग्दृश्यात्मकः सर्वः अपि अयं प्रपञ्चः शून्यम् एव। अत्र "असदेव इदमग्र आसीदिति श्रुतिः एव अस्ति प्रमाणम्। शशशृङ्गेण नागेन्द्रो मृतश्चेज्जगदस्ति तत्, श्रुतिः इयम् अपि अस्ति अत्र प्रमाणम्।

शंकराचार्यः:- अयुक्तम् अस्ति भवता उक्तम्। शून्यम् आसीत् इति अस्मिन् वाक्ये व्याघातप्रसक्तेः। यत् शून्यं तत् सत् कथं स्यात् ? अशून्यम् इदं जगत् शून्यात् कथं उत्पद्येत? यथा मृदुत्पन्नः घटः मृदात्मा दृश्यते, तथैव शून्यात् उत्पन्नः संसारः कथं न शून्यः दृश्येत? परन्तु न एवं केन अपि दृश्यते, प्रत्युत अस्ति संसारः इति सदात्मकत्वम् एव संसारस्य दृष्टं भवति।

बौद्धः:- न वयं शून्यात् उत्पन्नं जगत् इति ब्रूमः, प्रत्युत जगत् शून्यम् एव इति आतिष्ठामहे।

शंकराचार्यः- दृश्यमाने संसारे सः न अस्तीति कथं वक्तुं शक्यते? यदि अयं न अभविष्यत् शशशृङ्गम् इव न प्रत्यैष्यत ।

बौद्धः- तर्हि असत् एव इति श्रुतेः कः अर्थः स्यात् ?

शंकराचार्यः- असत् एव इति श्रुत्या, सृष्टेः पूर्वं संसारस्य नामरूपविभागः न आसीत् इति उच्यते । नामरूपे निषेधति श्रुतिः, न तु सत्वम्, अतएव अत्यन्तं असत् आसीत् इति न वदति श्रुतिः । संसारः असन् इति वचनं सदेव सोम्य इदमग्र आसीत् इति श्रुतिवचनेन विरुद्ध्येत ।

बौद्धः- तर्हि का गतिः शशशृङ्गेण इति श्रुतेः?

शंकराचार्यः- श्रुतिः इयं व्यनक्ति अभावं जगतः पारमार्थिकत्वस्य । अन्तःशून्यं बहिःशून्यमिति श्रुत्या अपि ब्रह्मणः निष्प्रपञ्चत्वं प्रतिपाद्यते, न तु शून्यत्वम्।

बौद्धः- रज्जौ अहेः असत्त्वस्य प्रतिपादनम् इव संसारस्य अपि असत्त्वस्य प्रतिपादनेन कथं न शून्यवादः एव सिद्धः भवेत् ?

शंकराचार्यः- सर्पस्य अधिष्ठानं रज्जुः, तद्वत् भ्रान्तिसिद्धस्य जगतः अपि केनचित् अधिष्ठानेन भाव्यम् । न इदम् अधिष्ठानं शून्यं भवितुम् अर्हति शून्यस्य अधिष्ठानत्वानर्हत्वात् । शशशृङ्गस्य अधिष्ठानत्वं न दृष्टं केन अपि । जगत् स्वयम् एव आत्मनः अधिष्ठानं भवेत् इदम् अपि अशक्यम् । अतः जगतः अधिष्ठानत्वेन सिद्धं भवति सद् ब्रह्म। शून्यं कथम् अपि न सिद्ध्यति ।

बौद्धः- अधिष्ठानम् एव न अस्ति इति यदि उच्येत?

शंकराचार्यः- निरधिष्ठानः भ्रमः न सम्भवति ।

बौद्धः- जगतः भ्रमः एव न अस्ति इति यदि मन्येत?

शंकराचार्यः- कुत्र न अस्ति भ्रमः? सुषुप्तौ वा? स्वप्ने वा? जाग्रति वा? प्रथमे इष्टा आपत्तिः । स्वप्ने जाग्रति वा चेत् तत् अपि अयुक्तम्, स्वप्ने जाग्रति च सर्वैः एव प्रपञ्चस्य अनुभूयमानत्वात् ।

बौद्धः- भ्रान्तिसिद्धं जगत् शून्यरूपम् एव भवति ।

शंकराचार्यः- वस्तुतः भ्रान्तिसिद्धं वस्तु अधिष्ठानरूपं भवति, यथा सर्पः रज्ज्वात्मकः, रजतं शुक्त्यात्मकं तथैव जगत् अपि ब्रह्मात्मकम् एव, न तु शून्यात्मकम्, यतः जगतः अधिष्ठानं ब्रह्म । शून्यस्य अधिष्ठानत्वम् एव न सम्भवति।

बौद्धः- आकाशार्थकं शून्यम् अभ्युपगतं स्यात् चेत् ?अखिलं जगत् इदं आकाशे कल्पितम् एव अस्ति ।

शंकराचार्यः- एतत् अपि अयुक्तम्, आकाशस्य अपि सति कल्पितत्वात् । अवशिष्टं सत् एव अस्ति, न तु शून्यम् आकाशम् ।

बौद्धः- आकाशं न अस्ति कल्पितम् ।

शंकराचार्यः- आकाशं कल्पितम् एव, आत्मनः आकाशः सम्भूतः इति श्रुतेः, सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवं च पृथिवीं चान्तरिक्षमथो स्वः इति श्रुतेः च । अवकाशरूपम् आकाशं न सत्पदार्थः भवितुम् अर्हति, सुषुप्तौ मृतौ मूर्च्छायां च अविद्यमानत्वात् । नासतो विद्यते भावो नाभावो विद्यते सतः ।

बौद्धः- परन्तु जगति अस्ति इति प्रतीतिः कथं भवति?

शंकराचार्यः- कारणसत्तया तादात्म्यात् । अथ च, जगत्कारणं न अस्ति आकाशं, अचेतनत्वात् । जगतः कारणं चेतनम्, तदैक्षत इति श्रुतेः । कामं भवेत् आकाशं कारणं पृथिव्यादीनाम्, परन्तु न तद् जीवानां कारणं भवितुम् अर्हति । अतः न अस्ति आकाशं सर्वकारणम् ।

बौद्धः- यदि जीवाः सन्ति अकारणाः, कथं तेषां कार्यत्वं सिद्ध्येत् । प्रसिद्धं तेषां कार्यत्वम्, विराजः पुरुषात् तेषाम् उत्पत्तेः श्रवणात् । उत्पन्नं हि कार्यं भवति ।

शंकराचार्यः- सत्यं, जीवानाम् यत् कार्यत्वम् तत् औपाधिकमेव, न तु स्वाभाविकम्।

बौद्धः- किम् तर्हि अयम् उपाधिः? यदि जीवस्य कार्यत्वम् औपाधिकम् तर्हि उपाधिना अपि कस्यचित् कार्येण एव भाव्यम् । कस्य कार्यम् भवेत् उपाधिः? आकाशस्य?

शंकराचार्यः- जीवः अस्ति अज्ञानोपाधिः । अज्ञानं च न आकाशकार्यम् । जीवः

अपि ब्रह्मणः प्रतिबिम्बः न भवति आकाशकार्यम् ।

बौद्धः- अज्ञानम् आकाशकार्यं न स्यात्, कार्यं तु स्यादेव? अज्ञानस्य न स्यात्, कस्यचित् अन्यस्य स्यात् ।

शंकराचार्यः- कार्यत्वाभ्युपगमे अज्ञानस्य किं भवतः अभीष्टं सिद्ध्यति । मम तु इष्टापत्तिः। न अनेन अजामेकाम् इति श्रुतिः विरुध्यते, अजापदस्य अब्रह्माजातार्थत्वात्। अज्ञानस्य कार्यत्वाभ्युपगमेन एव अज्ञानस्य ज्ञाननिवर्त्यत्वम् अभ्युपगतं भवति । सादिः पदार्थः सान्तः अपि भवति । अतः आकाशमपि संसारवत् अनित्यं मायामयम् एव । पारमार्थिकत्वं तु एकस्य अद्वितीयस्य सतः ब्रह्मणः एव अस्ति । इत्थं न सिद्ध्यति शून्यवादः ।

विज्ञानवादी- घटादयः बाह्याः अर्थाः न सन्ति । विज्ञानम् एव पूर्वपूर्ववासनावशात् घटाद्याकाराकारितं बहिः अस्ति इति भासते । सर्वासां वासनानां क्षये इदम् एव विज्ञानरूपम् कैवल्यम् अधिगम्यते, तदा मुक्तिः भवति इति अस्ति अस्माकं विज्ञानवादिनां बौद्धानां मतम् ।

शंकराचार्यः- यदि बाह्यः अर्थः एव नास्ति तर्हि तस्य वासना कथं भवेत् ? वासना यदि न स्यात् तर्हि तद्वशात् ज्ञानं बाह्याकारेण कथं परिणमेत् ? कथम् अपि कुत्र अपि अभावात् भावस्य उत्पत्तिः न केन अपि दृष्टा अनुभूता वा ।

सौत्रांतिकः- न वयं बाह्यस्य अर्थस्य अभावं वदामः । सौत्रांतिकाः वयं बौद्धाः बाह्यार्थस्य अनुमेयत्वम् आचक्ष्महे ।

शंकराचार्यः- बाह्यार्थः प्रत्यक्षसिद्धः । तं प्रत्यक्षसिद्धं अनुमेयं कथम् इव वक्तुं शक्यते? न हि प्रत्यक्षे अर्थे अनुमानं प्रवर्तते । समक्षम् अग्नौ दृश्यमाने न कः अपि धूमाद् हेतोः अग्निम् अनुमाति ।

वैभाषिकः- वयं वैभाषिकाः बौद्धाः बाह्यार्थं प्रत्यक्षं मन्यामहे । अतः निर्दुष्टम् अस्माकं बौद्धमतम् ।

शंकराचार्यः- सत्यं, अंशे अस्मिन् निर्दुष्टः भवान्, किन्तु स्कन्धपंचकमानिनि भवति

भवन्ति बहवः अन्ये दोषाः । तथाहि – सर्वं क्षणिकं क्षणिकं, सर्वं दुःखं दुःखं, सर्वं स्वलक्षणं स्वलक्षणं, सर्वं शून्यं शून्यम् इति भावयतः भवति मुक्तिः इति मतम् भवतां चतुर्णाम् अपि बौद्धानाम् । तत्र इमे समुद्यन्ति प्रश्नाः सर्वस्य क्षणिकत्वस्य उपदेष्टा भवतः आगमः तस्य कर्ता च स्वयं क्षणिकः अस्ति न वा? सर्वं दुःखम् इति वाक्ये प्रयुक्ते सर्वपदार्थे सुखम् अपि अन्तर्भवति न वा? भवति चेत् सुखं दुःखं कथम् उच्येत? सर्वं स्वलक्षणम् इति उपदिशन् आचार्यः भवतः किम् अभिप्रैति? स्वेन एव आत्मना लक्ष्यते इति स्वलक्षणं, स्वस्मिन् आत्मनि लक्ष्यते इति वा स्वलक्षणम्? आत्मनि कल्पितं जगत् आत्मना भास्यम् अपि स्यात् । स्वात्मानं लक्षयति इति स्वलक्षणम् इति उक्ते जन्मादिभिः लिङ्गैः जगतः, आत्मा एव साध्यते । सर्वं शून्यम्, सर्वम् असत् इति ब्रुवाणः बुद्धः स्वयं अपि शून्यः असन् वा कथं न भवेत्? सर्वम् अपि असत् इति भावयिता स्वयम् अपि असत् एव सिध्यति । असतः च भावः कथं सत् स्यात् ? वस्तुतस्तु ब्रह्मणः भिन्नं सर्वम् अपि असत् मिथ्या, इति एव अस्ति असतः अर्थः ।

बौद्धः- प्रतीयमानं कथं मिथ्या भवेत् ?

शंकराचार्यः- प्रतीयते, अतएव रज्जौ सर्पवत् अस्ति संसारः मिथ्या । अनया अन्याभिः च अनेकाभिः ईदृशीभिः युक्तिभिः अखिलम् अपि बौद्धमतं प्रत्याख्यातं भवति ।

बौद्धः- सत्यम् अस्ति भवतः भाषितम् । स्वीकरोमि अयुक्तत्वं अप्रमाणिकत्वं च बौद्धमतस्य । अङ्गीकुर्मः वयम् अद्वैतमतम् ।

शिष्याः- भगवत्पादशंकराचार्यस्य जयः अस्तु । वैदिकधर्मस्य जयः अस्तु ।

(अवसितः अष्टमोऽङ्कः, मठस्थापनं दिग्विजयश्चेतिनामकः)

***

# नवमोऽङ्कः

## ( स्थानम् - गंगा तटः )

(पात्राणि – गुरुः, जिज्ञासुः, मुमुक्षुः, गौडपादाचार्यः, शंकराचार्यः, शिष्याश्च)

प्रवेशकः

(गुरुः शिष्यश्च प्रविशतः)

गुरुः- शिष्याः ! आचार्यशिरोमणिः शङ्कराचार्यः प्रत्याख्याय सर्वान् अपि द्वैतवादान् अद्वैतमतस्य जयघोषं कारितवान् समग्रे अपि भारते वर्षे ।

मुमुक्षुः- एतदर्थं आचार्यदेवेन कियत् महत् आयासितम् ?

जिज्ञासुः- आत्मनः बहुभिः शिष्यैः राज्ञा सुधन्वना च आचार्यदेवः अटितवान् अखिलं भारतं वर्षम् । अहो, अनपायश्रद्धावन्तः आसन् इमे शिष्याः राजा सुधन्वा च सनातने वैदिके धर्मे ।

गुरुः- कृतात्मसाक्षात्कारः आचार्यदेवः आसीद् जीवन्मुक्तः , अतः केवलं लोकल्याणम् आसीत् कारणं तस्य दिग्विजययात्रायाः ।

मुमुक्षुः- न केवलं कर्म, आत्मनः अखिलं जीवनम् एव समर्प्य ईश्वराय कृतवान् अस्ति प्रमाणोत्तमम् साधनायाः ।

गुरुः- भगवद्गीतायां स्वयं भगवता उक्तम् अस्ति –
विहाय कामान्यः सर्वान्पुमांश्चरति निस्पृहः ।
निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ।। एषा ब्राह्मी स्थिति : ।

जिज्ञासुः- एकदा गंगातटे बालुकासु आस्त आचार्यदेवः ब्रह्म ध्यायन्।

मुमुक्षुः- तदैव पुरतः उपेतवान् कश्चन प्रवयाः यतिः, शान्तः मुदितमुखः च ।

गुरुः- एकस्मिन् करे धारयन् कमण्डलुं देदीप्यमानम्, परिवर्तयन् च अपरस्मिन् करे धृताः रुद्राक्षमालागुटिकाः नामजपगणनापराः ।

मुमुक्षुः- कः स आसीत् महात्मा?

गुरुः- सः आसीत् गौडपादाचार्यः, भगवत्पादस्य शङ्कराचार्यस्य गुरोः गोविन्दपादाचार्यस्य अपि परमः गुरुः ।

(गुरुः शिष्यः च निष्क्रामतः)

दृश्यम् – १

(शङ्कराचार्यः ध्यायन् आसीनः । नेपथ्यात् निर्वाणषट्कस्य श्लोकाः श्रूयन्ते)

मनोबुद्ध्यहङ्कारचित्तानि नाहं न च श्रोत्रजिह्वे न च घ्राणनेत्रे ।
न च व्योमभूमिर्न तेजो न वायुश्चिदानन्दरूपः शिवोऽहं शिवोऽहं ।।१।।
अहं निर्विकल्पो निराकाररूपो विभुर्व्याप्य सर्वत्र सर्वेन्द्रियाणाम् ।
सदा मे समत्वं न मुक्तिर्न बन्धश्चिदानन्दरूपः शिवोऽहं शिवोऽहम् ।।५।।

– आत्मषट्कम्

शंकराचार्यः– (उपयन्तं यतिं दृष्ट्वा संयोजितकरः)प्रणमामि भगवन्, किं प्रियं करवाणि अहम् ?

(साष्टाङ्गं प्रणम्य संयोजितकरः तिष्ठति)

गौडपादाचार्यः– (मधुरया गिरा गिरति)

वत्स, गोविन्दतः त्वं हृद्यां ब्रह्मविद्याम् अपठः । तां संसारात् उद्धारिकां सर्वां विद्यां कच्चिद् वेत्सि? कच्चित् निर्मलं सच्चिदानन्दरूपं तत्त्वं वेत्सि?

शंकराचार्यः– एवं भगवन् ।

गौडपादाचार्यः–तव शिष्याः भक्तियुक्ताः स्वानुरक्ताः विरक्ताः शान्ताः दान्ताः श्रद्दधानाः तत्त्वज्ञानकामाः विनीताश्च सन्ति किम् ? ते शिष्यवर्याः त्वां गुरुं शुश्रूषन्ते किम् ?

शंकराचार्यः– आम् भगवन् ?

गौडपादाचार्यः–अपि कामक्रोधादयः नित्याः शत्रवः त्वया निर्जिताः ? शान्तिपूर्वाः सद्गुणाः कच्चित् प्राप्ताः? अष्टाङ्गः योगः कच्चित् साधितः? अपि च कच्चित् तत्त्वगं ते चित्तम्?

शंकराचार्यः– ओम् भगवन् ।

(अद्वैताचार्येण गौडपादेन इत्थं पृष्टेषु प्रश्नेषु शङ्कराचार्यस्य चक्षुषी भक्तेः उद्रेकात् अनन्दाश्रुभरिते अभवताम् । संयोज्य शिरसि करौ उभौ प्रतिवक्ति)

भगवन्, यत् किञ्चित् अपि परमेष्ठिना भवता आचार्यदेवेन जिज्ञासितं तत्सर्वं भवत्कृपया संपादितम् एव अस्ति । अवबुद्धतत्त्वः अस्मि

अहम् । अधिकारिणः शिष्याः गुरोः सेवकाः सन्तिः । कामक्रोधादि शत्रवः जिताः, सद्गुणाः च गृहीताः । अष्टाङ्गयोगः साधितः । चित्तं च मम तत्त्वे एव रमते ।

भगवन्, करुणासागरस्य भवतः कृपादृष्टिः यस्मिन् पतेत्, किम् अस्ति तस्य दुर्लभम् ?

मूको वाग्मी मन्दधीः पण्डिताग्र्यः पापाचारः पुण्यनिष्ठेषु गण्यः ।
कामासक्तः कीर्तिमान्निःस्पृहाणामार्यापाङ्गालोकतः स्यात्क्षणेन ।।

– शं.दि. १६–४३

गौडपादाचार्यः–वत्स, तव गुणौघान् श्रुत्वा शान्तस्वान्तवन्तं त्वां द्रष्टुं मम गाढा उत्कण्ठा आसीत् । मम कारिकापद्यानाम् अर्कसदृशाः भाष्यमुखाः निबन्धाः त्वया कृताः, इति गोविन्दमुखात् श्रुत्वा प्रहृष्य अहं त्वां द्रष्टुम् आगतः।

(शंकराचार्यः अखिलं मांडूक्यभाष्यं श्रावयति)

शंकराचार्यः– प्रज्ञावैशाखवेधक्षुभितजलनिधेर्वेदनाम्नोऽन्तरस्थं
भूतान्यालोक्य मग्नान्यविरतजननग्राहघोरे समुद्रे ।
कारुण्यादुद्दधारामृतमिदममरैर्दुर्लभं भूतहेतो –
र्यस्तं पूज्याभिपूज्यं परमगुरुममुं पादपातैर्नतोऽस्मि ।।

गौडपादाचार्यः– विदुषां वर, अहं प्रसन्नः जातः । मत्तः वरं वृणीष्व ।

शंकराचार्यः– भगवतः दर्शनात् परः वरः कः अस्ति भगवन् ? तथापि गुरुदेव, मे चित्तं निरन्तरं ब्रह्मणि रमताम् ।

गौडपादाचार्यः– तथास्तु वत्स ।

(अवसितः नवमोऽङ्कः परमगुरुदर्शननामकः)

***

# दशमोऽङ्कः

## ( स्थानम् - काश्मीरदेशः )

(पात्राणि - भगवान् शंकराचार्यः, शिष्याः, वादी, काणादः, नैयायिकः, सांख्यः, बौद्धः, दिगंबर जैनः, मीमांसकः, राजा सुधन्वा, नाटकस्य सर्वाणि पात्राणि)

प्रवेशकः

(गुरुः शिष्यश्च प्रविशतः)

गुरुः- पृथिव्याम् अस्यां जम्बूद्वीपम् श्रेष्ठम् । जम्बूद्वीपे भारतवर्षं सर्वोत्तमम्। भारते वर्षे अपि कश्मीरमंडलम् रमणीयतमम् । कश्मीरप्रदेशे अस्मिन् अस्ति निवासः शारदादेव्याः अधीश्वर्याः वाचः ।

जिज्ञासुः- तत्र शारदादेव्याः कीदृशं मन्दिरम् आसीद् गुरुदेव?

गुरुः- शारदादेव्याः मन्दिरे बहवः मंडपा आसन्, चत्वारि द्वाराणि आसन्, एकञ्च सर्वज्ञपीठम् अपि आसीत् ।

मुमुक्षुः- सर्वज्ञपीठम् ? तत् किमर्थम् ?

गुरुः- सर्वज्ञः एव कः अपि सर्वज्ञपीठम् आरोढुम् अशक्नोत् । अन्यः कः अपि तत्र प्रवेष्टुं अपि न शक्नोति स्म । अतः भगवत्पादः शङ्कराचार्यः निरचिनोत् उद्घाटयितुं दक्षिणं द्वारं सर्वज्ञपीठस्य ।

(गुरुः शिष्यश्च निर्गच्छतः)

(नेपथ्ये)

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यपदवाक्यप्रमाणपारावारपारीणयमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाध्यष्टाङ्गयोगानुष्ठाननिष्ठतपश्चक्रवर्ती अनादिअविच्छिन्नगुरुपरम्पराप्राप्तषड्दर्शनसंस्थापनाचार्यव्याख्यानसिंहासनाधीश्वरसकलनिगमागमहृदयसाङ्ख्यत्रयप्रतिपादकवैदिकमार्गप्रवर्तकसर्वतन्त्रस्वतन्त्रनास्तिकद्वैतध्वान्तकदम्बज्ञानमार्तण्डबोधाब्जविभाकरश्रीराजाधिराजजगद्गुरुश्रीमच्छङ्कराचार्यो विजयतेतराम् विजयतेतराम् विजयतेतमाम् ।

दृश्यम् - १

(शिष्येषु एवम् विरुदावलिं उच्चैः पठितवत्सु, क्षिप्रम् एव आचार्यदेवः उपेत्य दक्षिणं द्वारं, कपाटं अनावृतं विधाय अन्तः प्रविशति । तदा एव...)

वादी- संन्यासिन्, कः भवान् ? कुतः आगतः?

शंकराचार्यः- अहं अस्मि भगवत्पादः शङ्कराचार्यः । भारतस्य दक्षिणस्मात् प्रदेशात् आगतः अस्मि । सर्वज्ञपीठस्य दक्षिणं द्वारं विवृतं विधित्सामि ।

वादी- अपिं भवान् सत्यम् एव सर्वज्ञः?

शंकराचार्यः- अहम् अस्मि सर्वज्ञः । मम किम् अपि अज्ञातं न अस्ति । अनुयोजयितुं शक्यः अस्मि भवता ।

वादी- आमन्त्रये तर्हि भवन्तम्, विधातुं वादं एभिः अस्मदीयैः विद्वद्भिः । इमान् पराजितान् विधाय एव भवान् आरोढुं शक्नोति इदं सर्वज्ञपीठम्।

काणादः- हे यते, अहम् अस्मि काणादमतावलम्बी । भवान् सर्वप्रथमं मम प्रश्नं प्रतिवदतु । संयुक्ताभ्यां द्वाभ्यां परमाणुभ्यां सूक्ष्मं द्व्यणुकम् उत्पद्यते इति वयं काणादाः मन्यामहे । द्व्यणुके अस्मिन् यत् अणुत्वं, तत् कुतः उत्पन्नम् इति वदतु भवान् यदि सर्वज्ञः ।

शंकराचार्यः- परमाण्वोः या द्वित्वरूपा संख्या, तस्याः उत्पन्नम् अस्ति द्व्यणुकगतम् अणुत्वम् ।

काणादः- युक्तम् उक्तम् ।

नैयायिकः- शङ्कराचार्य, अहम् अस्मि नैयायिकः । यदि सर्वज्ञः भवान् तर्हि वदतु कः विशेषः मुक्तौ, काणादमतायां, गौतममतायां च । यदि उत्तरं दातुम् असमर्थः, त्यजतु तर्हि सर्वज्ञत्वास्य अभिमानम् आत्मनः।

शंकराचार्यः- गुणैः सम्बन्धस्य आत्यन्तिके उच्छेदे आकाशम् इव या स्थितिः, सा मुक्तिः इति अस्ति काणादमतम् । गुणैः सम्बन्धस्य आत्यन्तिके उच्छेदे आकाशम् इव सानन्दानुभवा या स्थितिः सा मुक्तिः इति मतम् गौतमस्य। सप्तपदार्थाः इति अस्ति काणादं मतम्, षोडशपदार्थाः

इति गौतमीयम्। भेदः अयं स्पष्टः। अखिलस्य जगतः निमित्तकारणत्वम् ईश्वरस्य इति उभयत्र समानम्।

नैयायिकः:- युक्तम् अस्ति भवता उक्तम् ।

सांख्यः:- शङ्कराचार्यवर्य, सांख्यमतम् मम मतम् । जगतः मूलकारणं प्रकृतिः इति अस्ति सांख्यमतम् अस्माकम् । तत्र सा प्रकृतिः स्वतन्त्रा सती जगतः कारणं भवति, चैतन्येन अधिष्ठिता वा ? यदि भवान् सर्वज्ञः तर्हि प्रश्नस्य अस्य उत्तरं यच्छतु । उत्तरम् अयच्छतः भवतः सर्वज्ञपीठे आरोहणं दुःशकम् एव भविष्यति ।

शंकराचार्यः:- बहुरूपा त्रिगुणात्मिका प्रकृतिः स्वतन्त्रा एव जगतः कारणम् इति राद्धान्तः कपिलस्य सांख्याचार्यस्य । सा एव प्रकृतिः परतन्त्रा सती जगतः कारणम् इति वेदान्तसिद्धान्तः ।

सांख्यः:- सत्यम् अस्ति ।

(त्रयः अभिमानिनः बौद्धाः गर्जन्तः अवरुद्ध्य आचार्यम् पृच्छन्ति)

बाह्यार्थवादी- हे परिव्राट्, सर्वज्ञपीठम् आरोढुकामं पृच्छामि अहं बाह्यार्थवादी बौद्धः यत् द्विविधयोः बाह्यार्थवादयोः कः अस्ति भेदः परस्परम्, विज्ञानवादात् च इति विवृणोतु ।

शंकराचार्यः:- पदार्थमात्रं अनुमेयम् इति सौत्रान्तिकाः, प्रत्यक्षम् इति नैयायिकाः । पदार्थाः क्षणभंगुराः इत्यत्र अस्ति सम्मतिः उभयोः । किन्तु पदार्थसाधकेषु प्रमाणेषु अस्ति कश्चन भेदः । विज्ञानानि क्षणिकानि बहूनि च इति विज्ञानवादिनः। विज्ञानं स्थिरं एकं च इति अस्ति वेदान्तमतम् । अयम् एव भेदः ।

बाह्यार्थवादी- सत्यम् अस्ति ।

दिगम्बर जैनः:-हे आचार्य, अतः परं प्रत्यर्थयितुं प्रवृत्तः एव भवान् दिगम्बरं जैनम् । उपसृष्टास्तिकायानुबन्धैः पदैः किं प्रतिपाद्यमानं मन्यन्ते दिगम्बरजैन-मतानुयायिनः, इति वदतु सर्वज्ञमानी भवान् ।

शंकराचार्यः- शृणोतु तावत् जैन पंडित, जीवास्तिकायः, पुद्गलास्तिकायः, धर्मास्तिकायः अधर्मास्तिकायः, आकाशातिकायः च इति पञ्चभिः पदैः स्थावरजंगमाः सर्वे जीवाः पृथिव्यादिपञ्चभूतानि च उच्यन्ते । अन्यत् अपि यत् किञ्चिद् भवतः मतविषयकं प्रष्टव्यम् अस्ति चेत् पृच्छतु क्षिप्रम् ।

दिगम्बर जैनः-न अवशिष्टं किम् अपि प्रष्टव्यम् ।

मीमांसकः- आचार्य, अतः परम् अस्ति भवतः प्रत्यर्थी मीमांसकः । मम अस्ति अयं प्रश्नः यत् मीमांसकराद्धान्ते शब्दः द्रव्यं वा गुणो वा?

शंकराचार्यः- नित्याः व्यापकाः च वर्णाः सन्ति श्रोत्रविषयाः अतः शब्दजालं अस्ति द्रव्यम् नित्यं व्यापकं च इति जैमिनिमतावलम्बिनां मतम् ।

मीमांसकः- सत्यम् अस्ति प्रतिपादितं भवता ।

बौद्धः- सर्वज्ञः अस्ति भगवत्पादः शङ्कराचार्यः । वादिनाम् सर्वे अपि प्रश्नाः तेन साधु प्रत्युक्ताः ।

जैनः- आमन्त्रये सर्वान् वादिनः सर्वज्ञम् आचार्यं अर्चयितुम् ।

(सर्वे वादिनः पुष्पैः विकिरन्तः प्रणमन्ति । बहिः मन्त्राः उच्चार्यन्ते । दक्षिणद्वारेण प्रवेष्टुं मन्दिरं वादिनः उदमीलयन् द्वारम् । धृतपद्मपादकरे, शङ्कराचार्ये सर्वज्ञपीठम् आरोढुं प्रवृत्ते, आकाशे स्थिता सरस्वती अवदत्)

सरस्वती- हे शंकराचार्य, सर्वज्ञत्वे भवतः न अस्ति संशयलेशः अपि, परन्तु भद्रासने उपविविक्षुणा यथा सर्वज्ञेन भाव्यम् तथा पूतेन अपि भाव्यम्। अपि पूतः भवान् सर्वथा?

शंकराचार्यः- आजन्मनः शुद्धः अस्मि मातः सरस्वति, अकृतनिषिद्धाचरणः अस्मि सर्वथा।

सरस्वती- शङ्कराचार्यवर्य, सर्वज्ञः पवित्रः अधिकारी च भवान् अर्हति सर्वथा उपवेशनम् अस्मिन् विद्याभद्रासने ।

(आचार्यः भवति आरूढः सर्वज्ञपीठम् । दुन्दुभिघोषः भवति । पतति च पुष्पवृष्टिः आकाशात्)

सर्वज्ञश्रेष्ठस्य शङ्कराचार्यस्य जयः अस्तु । सनातनस्य वैदिकधर्मस्य जयः अस्तु।

(जयघोषानन्तरं राजा सुधन्वा सविधि पूजितवान् आचार्यम् । सर्वे अपि सत्कृतवन्तः आचार्यम् । अनन्तरं सर्वे स्वस्य स्वस्य स्थाने आसते ।)

सुधन्वा- हे सभासदः ! वर्धमानासु अवैदिकमतप्रवृत्तिषु स्वयं भगवान् शङ्करः एव अवातरत् शिवगुरोः आर्याम्बायाः च तनूजः उद्धर्तुम् सनातनम् वैदिकं धर्मम् । अवतीर्णकार्तिकेयेन कुमारिलभट्टेन विधाय बौद्धान् पराजितान् तान् निःशेषान् व्यदधात् । अवतीर्णशेषभगवतः गुरोः गोविन्दपादाचार्यात् लब्धसंन्यासदीक्षः अयं काशीं गतः । तत्र भगवन्तं विश्वनाथं साक्षात् कृतवान् । अवतीर्णेन ब्रह्मणा मण्डनमिश्रेण, अवतीर्णया सरस्वत्या उभयभारत्या च पुनः प्रवर्तितः नष्टप्रायः वैदिकः कर्ममार्गः, ततः तम् एव मण्डनमिश्रं वादे पराजितवान् । दशदिक्षु विजित्य सर्वान् अपि विदुषः उत्तोलितवान् विजयध्वजं अद्वैतमतस्य। पर्यवसाने च सन्तोष्य सर्वान् अपि वादिनः अवतीर्णः साक्षात् कैलासपतिरेवैष श्रीशङ्कराचार्यः विराजतेतमाम् अस्मिन् विद्याभद्रासने।

सुरेश्वरः- अवतीर्णेन इन्द्रेण राज्ञा सुधन्वना अपि बहु साहाय्यम् आचरितम् पुनः स्थापनाकार्ये सनातनस्य धर्मस्य ।

शिष्याः- भगवत्पादस्य शङ्कराचार्यस्य जयः अस्तु, सनातनस्य वैदिकधर्मस्य जयः अस्तु।

शंकराचार्यः- शिष्याः, अवतीर्णस्य मम अशेषाणि कार्याणि सम्पादितानि । सर्वज्ञपीठम् यत् आरूढम् तत् न आत्मनः मानाय प्रत्युत अद्वैतवेदान्तसिद्धान्तस्य प्रतिष्ठायै । अतः परम अद्वैतसिद्धान्तपरम्पराम् अविच्छिन्नां प्रवर्तयितुं यूयं स्थ पर्यनुयोज्याः । मम चत्वारः अपि शिष्याः अधिष्ठाय चतुरः मठान् चतसृषु भारतवर्षस्य दिक्षु मया स्थापितान्, कुर्युः स्वस्य स्वस्य क्षेत्रेषु प्रचारं वैदिकस्य धर्मस्य ।

(चतुर्भ्यः अपि आत्मनः शिष्येभ्यः ज्वलदुल्मुकम् एकैकं, ज्ञानदीपकप्रतीकं प्रयच्छन् आदिशति)

सुरेश्वर! भवान् पश्चिमायां दिशि द्वारकायां शारदापीठमधिष्ठाय प्रचारयतु वेदान्तसिद्धान्तम् ।

सुरेश्वरः- यथाज्ञापयति गुरुदेवः ।

शंकराचार्यः- पद्मपाद, भवान् अपि पूर्वस्यां जगन्नाथपुर्यां अधिष्ठितः गोवर्धनमठम्, प्रचारयतु सनातनं वैदिकं धर्मम् ।

पद्मपादः- ओम् गुरुदेव ।

शङ्कराचार्यः- हस्तामलक, भवान् अपि आस्थितः शृङ्गगिरिमठम् अद्वैतं प्रख्यापयत।

हस्तामलकः- यथाज्ञापयति गुरुदेवः ।

शङ्कराचार्यः- तोटक, भवान् उत्तरस्यां बदरीनाथे ज्योतिर्मठे आसीनः प्रवर्तयतु वैदिकधर्मपरम्पराम् ।

तोटकाचार्यः- तथास्तु गुरुदेव ।

शङ्कराचार्यः- अवहिताः भवन्तु । यद्यपि राज्यैश्वर्यं यतेः अस्ति निषिद्धम् तथापि चतुष्पीठाधीश्वराः बिभृयुः राजचिह्नानि, परिवृताश्च स्युः राजा इव वैभवेन यतः साधारणोः जन अभिभूतोः वैभवेन प्रमाणयति वैभवसम्पन्नम्, अनुवर्तते च तम् । अतः विभवे वर्तमानाः अपि पीठाधीश्वराः अम्भसा पद्मपत्रम् इव अलिप्ता सन्तः लोकं प्रवर्तयन्तु कल्याणमार्गे ।

(शङ्कराचार्यः एकैकस्मै एकैकम् ज्वलदुल्मुकं यच्छति । रङ्गमञ्चे भारतस्य मानचित्रं निर्मितमस्ति । तदुपरि चतसृषु दिक्षु चतुर्षु पीठेषु चत्वारः शिष्याः ज्वलदुल्मुककराः आसते । भारतस्य अखिलस्य मानचित्रस्य रेखासु प्रज्ज्वलिताः दीपाः स्थाप्यन्ते । सर्वाणि पात्राणि नाटकस्य आसीनाः भवन्ति सर्वज्ञपीठसोपानेषु ।)

## भरतवाक्यम्

जयतु जयतु नित्यं भारती ब्रह्मविद्या<br>
जयतु वरददेवः शङ्कराचार्यवर्यः ।<br>
जयतु गुरुगुरूणां शिष्यसत्सम्प्रदायो<br>
जयतु परमसत्यं ह्येकमेवाद्वितीयम् ।।<br>
धर्मसुस्थापिका वाणी बोधदात्री शिवङ्करी ।<br>
वैदिकी शाङ्करी गुर्वी विजयेततमामलम् ।।

नृत्यम्

रक्षिता मही पाखंड धर्मतः,
शङ्करभगवत्पादस्याधमर्णाः वयं सदा।
चेतना परिपूर्णोऽस्त्ययं शाश्वतः धर्मः
शङ्करभगवत्पादस्याधमर्णाः वयं सदा ।
जय जय शंकर हर हर शंकर
अवतीर्णः कालट्यां दक्षिणे भारते
उपदिष्टो गुरुगोविन्देन नर्मदातटे
विश्वनाथः काश्यां लीलया मिलितः
शङ्करभगवत्पादस्याधमर्णाः वयं सदा
जय जय शंकर हर हर शंकर ।
गीतोपनिषदं ब्रह्मसूत्रभाष्यं बहुकृतं
संमूढपंडितानाम् अभिमानः नाशितः ।
दशापि दिशः सनातनेन आनन्देन भरिताः
शङ्करभगवत्पादस्याधमर्णाः वयं सदा
जय जय शंकर हर हर शंकर ।
श्रृंगगिर्यां द्वारकायां पुर्यां बदरीनाथधाम्नि च
कृताः मठाः चत्वारः रक्षितुं सम्प्रदायान् ।
अद्वितीयेन एकमेव ब्रह्मज्ञानेन
शङ्करभगवत्पादस्याधमर्णाः वयं सदा
जय जय शंकर हर हर शंकर ।

सर्वज्ञपीठारोहणनामकः अवसितः दशमोऽङ्कः
युगपुरुषः आदिशंकराचार्य इत्येतन्नामकम्
अवसितं प्रकरणनाट्यम्

।। ॐ तत्सत् ।।



# स्वामी सदानन्द सरस्वती

| | |
|---|---|
| जन्म : | भाद्रकृष्ण द्वितीया सं. 2015 (31 अगस्त 1958) बरगी, करकबेल, नरसिंहपुर (म.प्र.) |
| माता : | स्व. श्रीमती मानकुंवर देवी |
| पिता : | आयुर्वेदरत्न पं. विद्याधर अवस्थी |
| पूर्वनाम : | रमेश कुमार अवस्थी |
| शिक्षा : | माध्यमिक शिक्षा बरगी (म.प्र.) में, संस्कृत शिक्षा झौंतेश्वर, नरसिंहपुर (म.प्र.) में, व्याकरण, वेद और वेदान्त की शिक्षा काशी (वाराणसी) में। |
| दीक्षा : | प्रयाग कुम्भ (सन् 1977 ई.) में। |
| संन्यास : | चैत्र शु. 13 सोमवार सं. 2060 तदनुसार 15 अप्रैल 2003 काशी में, पूज्य महाराजश्री के प्रथम दण्डी संन्यासी शिष्य। |
| श्रीविद्यापूर्णाभिषेक : | श्रावण शुक्ल नवमी सं. 2067 तदनुसार 18 अगस्त 2010, परमहंसी गंगा आश्रम में। |
| पूर्णाभिषेक नाम : | ज्ञानशक्त्यम्बासहितसदानन्दनाथः। |
| दीक्षागुरु : | अनन्तश्रीविभूषित ज्योतिष्पीठाधीश्वर एवं द्वारकाशारदापीठाधीश्वर जगद्गुरु शङ्कराचार्य **स्वामीश्री स्वरूपानन्द सरस्वती जी महाराज** |
| अन्य अभिरूचियाँ : | वेद-वेदान्त का अध्ययन के साथ शैक्षणिक क्षेत्र में, जैसे- शिशुमन्दिर, हाईस्कूल, कॉलेज और नेत्रालय का सञ्चालन। इसके अतिरिक्त अस्पताल, ग्रन्थ प्रणयन, ग्रन्थ पुनर्मुद्रण, प्राचीन ग्रन्थ संरक्षण आदि में पूज्य गुरुजी की आज्ञा से संलग्नता। |
| निर्देशन में प्रकाशित : | लगभग 50 से अधिक ग्रन्थों का प्रकाशन के साथ मासिक पत्रिका नवभारती एवं त्रैमासिक पत्रिका शङ्कराचार्य-संदेश का संपादन एवं प्रकाशन। |

